# भूमिका।



“ निस्ताराय तु लोकाना स्वयं नारायणः प्रभुः । व्यासरूपेण कृतवान् पुराणानि महीतले ॥ पठनाच्छ्रवणाद्येषां नृणां पापक्षयो भवेत् । धर्माधर्मपरिज्ञानं सदाचारप्रवर्तनम् ॥ गतिश्च परमा तद्भक्तिर्भगवति प्रभौ ॥—”

—इत्यादिपद्मपुराणोक्तवाक्यैर्लोकोपकाराय भगवान् व्यासरूपेण पुराणान्यरचयदिति सुविदितमेव ।

तत्र च सदुपदेशप्रचुरमहानुभावदेवर्षिब्रह्मर्षिराजर्षिपरमपावननदनदीगिर्याश्रमादिवर्णनरूपरत्नगर्भमिदं स्कन्दपुराणमेवागाधत्वेन चतुर्वर्गफलरत्नप्रदत्वेन चाधरीकृताब्धीति न केषामप्यविदितम् । तदुद्धृतकौस्तुभायमानाखिलखण्डचूडामणिरयं केदारखण्डः सर्वतोऽपि विश्वजनीन इति न शक्यमेतन्माहात्म्यमभिधातुमेकयातिदीनरसनया । चिराय मुद्रयितुमिष्टोऽपि सम्प्रत्येवोपलब्धः, स च लिपिदोषाज्जीर्णपत्रत्वेन वर्णभ्रंशाच्च नातिशुद्धोऽपि शास्त्रिभिर्यथामति संशोध्य स्वकीये “श्रीवेङ्कटेश्वर” मुद्रणालयेऽङ्कितः परश्चेदमाशासे यदि कस्यचिन्महात्मनोऽन्तिके चेदतिशुद्धस्तर्हि सोऽवश्यं प्रेषयेत्, यतो द्वितीयावृत्तौ भूयोऽपि संस्कारेण शुद्धतमतामाप्नुयादिति शम् ।

श्रेष्ठी श्रीकृष्णदासात्मजः क्षेमराजः,

“श्रीवेङ्कटेश्वर” स्टीम्–यन्त्रालयाध्यक्षः

मुम्बई-स्थः ।

# अथ स्कन्दपुराणान्तर्गतकेदारखण्डस्थितविषयानुक्रमणिका प्रारभ्यते ।

समाप्तेयं स्कंदपुराणान्तर्गतकेदारखंडास्थितविषयानुक्रमणिका ।

श्रीगणेशाय नमः ॥ अथ केदारखण्डप्रारम्भः ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥
॥ १ ॥ ऋषय ऊचुः ॥ यदक्षरं परं ब्रह्म रूपादिगुणवर्जितम् ॥ नामभेदादिभिर्हीनं निरंजनमविच्युतम् ॥ २ ॥ कीदृशं तत्त्वरूपं हि कथं
प्राप्येत मानवैः ॥ तदस्माकं महाभाग वद सूत कृपान्वितः ॥ ३ ॥ सूत उवाच ॥ शृणुध्वं मुनयः सर्वे ये संति श्रोतुमिच्छवः ॥ यदाह
भगवान्पुत्रो ब्रह्मणः परमात्मनः ॥ ४ ॥ वसिष्ठो मुनिशार्दूल अरुन्धत्यै तपोधनाः ॥ तद्वै संप्रति वक्ष्यामि स्वर्गीयंमोक्षदायकम् ॥ ५ ॥
एकदारुंधती विप्रं पप्रच्छ भक्तितत्परा ॥ ६ ॥ अरुंधत्युवाच ॥ भगवन्मुनिशार्दूल त्वमेव मम देवता ॥ सर्वज्ञोसि किल प्राज्ञ वद किंचि
च्छुभावहम् ॥ ७ ॥ अक्षरं यत्परं ब्रह्म यस्मिन्सर्वमिदं ततम् ॥ कथं तज्ज्ञायते लोके नामादि रहितं मुने ॥ ८ ॥ कथं प्राप्स्यंति चरमे
युगे विप्रादयः परम् ॥ तपोभक्तिविहीनानां कथं कलियुगे गतिः ॥ ९ ॥ इदं कथं समुद्भूतं जगदेतच्चराचरम् ॥ किं श्रेयः कर्मणां विप्र कथं
वर्णादिकाः क्रियाः ॥ १० ॥ संख्या मन्वंतरादीनां युगादीनां तथा स्थितिः ॥ अन्यानिकानि तीर्थानि भवमुक्तिकराणि मे ॥ एतत्सर्वं
समासेन विप्रायै वद सांप्रतम् ॥ ११ ॥ एतत्प्रश्नस्य नान्यत्र ज्ञाता कश्चिन्महामते ॥ सूत उवाच ॥ इति श्रुत्वा वचस्तस्या वसिष्ठो
मुनिराट् ततः ॥ दध्यौ क्षणं पुरावृत्तं ज्ञात्वा वै तामुवाच ह ॥ १२ ॥ वसिष्ठ उवाच ॥ शृणु प्रिये पुरा देवीं पृच्छंतीं जगदीश्वरः ॥
उवाच भक्तिसंपन्नां सारात्सारतरं परम् ॥ १३ ॥ परात्मा निर्गुणः शांतो व्यक्ताव्यक्तो निरामयः ॥ निःप्रपंचो निराकारो नित्यानंदो
निरीश्वरः ॥ १४ ॥ एक एव त्रिलोकात्मा रूपादिगुणवर्जितः ॥ न तद्रूपं सितं श्यामं कपिशं पिंगलं न च ॥ १५ ॥ न वै रक्तं न वा
पीतं चित्रं संकरमेव च ॥ न पाणिपादनेत्राद्यैर्वर्जितो विभुरीश्वरः ॥ १६ ॥ न कर्ता न च भोक्ता च न घ्राता रसवर्जितः ॥ न श्रोता
स्पर्शयुक्तो न न मंता न च पाचकः ॥ १७ ॥ रूपं तस्य न जानंति ब्रह्माद्यास्त्रिदिवौकसः ॥ अहमेको महादेवि किंचिज्जानामि तं विभुम्
॥ १८ ॥ यं वदंति महात्मानं सत्त्वादिगुणवर्जितम् ॥ अनादिमध्यनिधनं सत्तामात्रमगोचरम् ॥ १९ ॥ यं वदंति परां ब्रह्म शरीरादि
विवर्जितम् ॥ मांसासृङ्मेदरहितं नानारूपमजं परम् ॥ २० ॥ यद्वै ब्रह्मशरीरादिव्यतिरिक्तो महेश्वरः ॥ पुरुषं सांख्यसूत्रस्य व्याख्या

स्कं. पु. तारो विदुर्बुधाः ॥ २१ ॥ अद्वैतवादिनो यद्वै अदृश्यं सर्वगं प्रभुम् ॥ कृमिकीटादि यत्किंचित्तत्सर्वं परमेश्वरः ॥ २२ ॥ नैयायिका द्विधाभूतं के. खं.
॥ १ ॥ जीवब्रह्मेति संज्ञितम् ॥ प्रमाणादिपदार्थैर्यद्वेद्यं सर्वेश्वरं विभुम् ॥ २३ ॥ मीमांसकाः कर्मसंज्ञं ब्रह्म प्रोचुर्निरामयम् ॥ यज्ञदेहं धर्मविदो अ. २
वेदनिर्णयपारगाः ॥ २४ ॥ षट्चक्रपरिभेत्तारं ब्रह्मरंध्रकपाटकम् ॥ शैवाः शिव इति प्रोचुर्वैष्णवा विष्णुनामकम् ॥ २५ ॥ सौराः सूर्यं
तु गाणेशा गणेशं शाक्तकाः शिवाम् ॥ सहस्रशिरसं देवमव्ययं पुरुषोत्तमम् ॥ २६ ॥ तदेव परमं ब्रह्म जलात्मा भगवानजः ॥ यत्रां
बुनि महादेवि अपारे चित्रदुर्गमे ॥ २७ ॥ ब्रह्मांडकोटयो यस्मिन्ननंता ब्रह्मकोटयः ॥ चतुर्मुखस्तु कस्मिंश्चिद्दशास्यः कुत्रचिन्मतः ॥ २८ ॥
कुत्रचिद्विंशतिमुखस्त्रिंशदास्यस्तु कुत्रचित् ॥ तथा शतमुखः कस्मिन्मुखानां द्विशतं तथा ॥ २९ ॥ त्रिशतास्यस्तु कस्मिंश्चित्सहस्रास्यस्तु
कुत्रचित् ॥ तथायुतमुखः कुत्र तथानंतमुखस्तथा ॥ ३० ॥ ब्रह्माण्डं प्रति ब्रह्मादित्रयो देवाः सवासवाः ॥ चतुर्मुखादयस्तत्र वर्तंते
सुरवंदिते ॥ ३१ ॥ समुद्राः सरितश्चैव पर्वतास्तत्र तत्र ह ॥ उन्मज्जंति निमज्जंति जलब्रह्मण्यनेकशः ॥ ३२ ॥ इति तद्ब्रह्म विज्ञेयम
नंतं सर्वतोमुखम् ॥ तदेव सर्वरूपेण ब्रह्मांडेषु प्रवर्तते ॥ ३३ ॥ इति श्रीस्कांदे केदारखंडे ब्रह्मस्वरूपवर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥
॥ श्रीशिव उवाच ॥ ॥ तदेतत्परमं ब्रह्म द्रवरूपं महेश्वरि ॥ गंगाख्यं यत्पुण्यतमं पृथिव्यामागतं शिवे ॥ १ ॥ गां गतेति ततो गंगा
नाम तस्या बभूव ह ॥ २ ॥ श्रीपार्वत्युवाच ॥ देवदेव महादेव धन्यास्मि कृतपुण्यका ॥ यस्यास्त्वमीदृशो भर्ता सर्वविद्वसि प्रभो
॥ ३ ॥ यद्ब्रह्म गदितं देव त्वया ब्रह्मांडबाह्यतः ॥ यस्मिन्ननेककोटीनां कोटयो ब्रह्मदेहकाः ॥ ४ ॥ तद्वदस्व कथं देव प्राप्तं भूमौ निराम
यम् ॥ किमर्थं स्त्रीत्वसंप्राप्तिर्द्रवस्य परमात्मनः ॥ ५ ॥ अनंतकोटयः संति ब्रह्माण्डानां सहस्रशः ॥ तेष्वंडेषु महादेव स्थितिः का वा
सुराश्च के ॥ ६ ॥ एतत्सर्वं समासेन ब्रह्माण्डानां तु विस्तरम् ॥ भक्तास्मि नितरां देव परं कौतूहलं हि मे ॥ ७ ॥ श्रीशिव उवाच ॥ शृणु
देवि समासेन यत्पृष्टं हिमवत्सुते ॥ उत्पत्तिं द्रवरूपस्य श्रीविष्णोः परमात्मनः ॥ ८ ॥ पुरा प्रथमके सर्गे जगत्यंबुमये सति ॥ शय्यायां ॥ १ ॥

शेषसंज्ञायां सुष्वाप भगवान्प्रभुः ॥ ९ ॥ नष्टीभूते तु त्रैलोक्ये सहस्थावरजंगमे ॥ कल्पांते पुनरादौ स परमात्मा सनातनः ॥ १० ॥

सिसृक्षुः सर्वलोकांश्च चिंतयामास पार्वति ॥ तस्य चिंतयतो देवि कमलं नाभितः प्रभोः ॥ ११ ॥ जातं तस्मिन्महाभागे ब्रह्मा जात
श्चतुर्मुखः ॥ जाते तस्मिन् महाविष्णुरुवाच च पुनःपुनः ॥ १२ ॥ लोकान् सृज सृजेत्याह ब्रह्मँल्लोकपितामह ॥ श्रुत्वैतद्वचनं तस्य
तुष्टाव परमेश्वरम् ॥ १३ ॥ ब्रह्मोवाच ॥ नमस्ते सुरमुख्याय निर्लेपाय महात्मने ॥ आदिमध्यान्तहीनाय सर्वस्य जगतः कृते ॥ १४ ॥
न ते रूपं महात्मानो रुद्रा वा त्रिदिवौकसः ॥ न ते क्रियां न ते क्रीडां न ते ज्ञानं न वै विदुः ॥ १५ ॥ बालकोहं बालिशोहमज्ञानान्मूढ
चेतनः ॥ कथं तव महिम्नो हि पारं यास्यामि दुर्गमम् ॥ १६ ॥ कुत्र ते पाणिपादादि कुत्र ते नासिका शिरः ॥ कुत्र ते स्थितिरुत्प
त्तिर्जाने नो भगवन्प्रभो ॥ १७ ॥ नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमामि ते ॥ नमामि ते नमस्काराः शतशोथ सहस्रशः ॥ १८ ॥
यद्ब्रह्म गदितं लोके जलरूपं त्वमेव हि ॥ प्रीणासि तेन रूपेण जगत्सर्वं चराचरम् ॥ १९ ॥ यद्ब्रह्म पृथिवी भूत्वा लोकान् धारयसि
प्रभो ॥ तस्मै ते शतशो देव नमोऽस्तु परमेश्वर ॥ २० ॥ तेजोमयं तु यद्रूपं रविचंद्रग्रहादिकम् ॥ तमो नाशयसि प्राज्ञ सर्वस्य जगतः
प्रभो ॥ २१ ॥ यद्ब्रह्म वायुरूपेण सर्वेषां प्राणसंज्ञकः ॥ त्वं चेष्टयसि भूतानि स्थावराणि चराणि च ॥ २२ ॥ आकाशाख्यं तु यद्ब्रह्म
बाह्यंतः संस्थितः सदा ॥ शब्दानुकूलो भगवान् मायया बहुलीभवन् ॥ २३ ॥ अखंडोयं तु यः कालः कलाकाष्ठादिनामकः ॥ त्वत्स्व
रूपमहं मन्ये व्यक्तो नित्यः सनातनः ॥ २४ ॥ पूर्वापरादिभेदैस्त्वं दिगात्मा सर्वभावनः ॥ आत्मा सर्वगतः स्थाणुर्जीवब्रह्मेति संज्ञितः
॥ २५ ॥ इंद्रियाणि विभो अश्वा विषया रश्मयः स्मृताः ॥ मनो विषयसंयोगैर्नीयसे सुरनायकः ॥ २६ ॥ निर्मलो निर्विकारस्त्वं
कार्यकारणवर्जितः ॥ यथा दीपो निवातस्थो नेंगते त्वं तथा स्मृतः ॥ २७ ॥ कारणं न च कार्यस्त्वं प्रकृत्या भिन्न उच्यसे ॥ प्रकृत्या
सहसंयोगात्करणं कारणं भवान् ॥ २८ ॥ नमो नमस्ते शतशो देवदेव जगत्पते ॥ असमर्थो भवान् मेद्य सृष्टिं कर्तुं कथं क्षमः ॥ २९ ॥
श्रीभगवानुवाच ॥ भव प्रजापतिर्ब्रह्मन्सर्वज्ञत्वं ददामि ते ॥ सर्वलोकस्य कर्त्ता त्वमायुः सर्वाधिकं तव ॥ ३० ॥ प्रीतोस्मि वच्मि ते प्रीत्या
स्तुत्या च कृपया त्वया ॥ वरमन्यं प्रयच्छामि तद्ब्रूहि वरमुत्तमम् ॥ ३१ ॥ ब्रह्मोवाच ॥ अहं सृष्टोस्मि भवता लोकं स्रक्ष्यामि वै प्रभो ॥

सर्वज्ञत्वं मया लब्धं किमन्यद्दरयामि ते ॥ ३२ ॥ वराहौं यद्यहं देव वरं चेद्दातुमिच्छसि ॥ त्वया समग्रभावेन स्थातव्यमवनीतले
॥ ३३ ॥ शृणु कर्माणिं भवता सृष्टोस्मि भगवन् प्रभो ॥ पापिनश्चापि स्रष्टव्याः पुण्यात्मानस्तथैव च ॥ ३४ ॥ तेषां मुक्तिर्भवेद्यस्मा
त्तत्कुरुष्व महाप्रभो ॥ अस्माभिरपि यन्नित्यं ध्येयोसि पुरुषर्षभ ॥ ३५ ॥ तदाज्ञापय देवेश सृष्टिसंहारकारक ॥ भविष्यंति नरा लोके
मायामोहेन संवृताः ॥ ३६ ॥ त्वां तत्त्वतो न वेत्स्यंति पुण्यापुण्यसबंधनाः ॥ स्वल्पेनैव ह्युपायेन मुक्तिमार्गं वदस्व मे ॥ ३७ ॥ ईश्वर
उवाच ॥ इति श्रुत्वा वचस्तस्य ब्रह्मणः स्वांगजन्मनः ॥ उवाच मधुरं वाक्यं मेघगंभीरया गिरा ॥ ३८ ॥ श्रीभगवानुवाच ॥ सम्यगुक्तं
त्वया ब्रह्मन्कर्तव्यं त्वद्वचो मया ॥ इंद्रानुजो भविष्यामि वामनत्वमुपागतः ॥ ३९ ॥ अस्मिन्नेव तु काले तु बलिर्नाम भविष्यति ॥
ऐंद्रं पदं तु संप्राप्तुं यतिष्यति महामखम् ॥ ४० ॥ तस्मिन्नेव महायज्ञे छलयिष्यामि वै बलिम् ॥ पुनरेकेन लोकेश भूतलं सकलं तदा
॥ ४१ ॥ अनंतकोटिब्रह्मांडा ईदृशा अधिकास्तथा ॥ तरंगभंगिसंलोला विचरंति महामते ॥ ४२ ॥ द्रवरूपं स एवाहं नित्योस्मि
सुरनायक ॥ तेन वै नखजातेन रंध्रेण सहसा तु तत् ॥ ४३ ॥ द्रवरूपा तु तद्ब्रह्मधारा ब्रह्मसमुद्भवा ॥ आयास्यति महाभाग स्मृता
मोक्षप्रदायिनी ॥ ४४ ॥ गां गमिष्यति मे धारा ततो गंगा भविष्यति ॥ एकेन तु विभागेन स्वर्गमेष्यामि पद्मज ॥ ४५ ॥ पुनः पातालमार्गं
वै भूत्वा भोगवती नदी ॥ तदा नाम्ना त्रिपथगा स्मरणात्पापनाशिनी ॥ ४६ ॥ तदेव मे परं रूपं सर्वकामार्थसिद्धिदम् ॥ नरा
दर्शनमात्रेण भविष्यंति विकल्मषाः ॥ ४७ ॥ धन्यास्त एव ये मर्त्याः सदा मद्भक्तितत्पराः ॥ तेषां मुक्तिर्महाभाग सुलभा करसंस्थिता
॥ ४८ ॥ न योगानां शतैर्दैव न तपोभिर्न केनचित् ॥ संतुष्टोस्मि तथा ब्रह्मन्यथा तज्जलपूजनात् ॥ ४९ ॥ एतत्तवानुरोधेन सर्वं
संपादयाम्यहम् ॥ मुक्तिकारणमेतस्मान्नान्यदस्ति महामते ॥ ५० ॥ ईश्वर उवाच ॥ इत्युक्त्वा भगवान् विष्णुस्तत्रैवांतरधीयत ॥ सोपि
ब्रह्मा जगत्सर्वं चकार स चराचरम् ॥ ५१ ॥ सर्वं तत्कृतवान्देवः प्रतिज्ञातं तु यत्पुरा ॥ सेयं धारा महादेवि गंगायाः पावना परा ॥ ५२ ॥
भक्त्या मया धृता शीर्षे सर्वकल्मषनाशिनी ॥ एतत्सर्वं समासेन कथितं ते महेश्वरि ॥ ५३ ॥ तज्जलं तु परं ब्रह्म धारा स्त्रीयं महेश्वरि ॥

यस्या दर्शनमात्रेण सर्वैः पापैः प्रमुच्यते ॥ ५४ ॥ श्रुत्वेमां तु कथां दिव्यां सर्वपापक्षयो भवेत् ॥ ब्रह्माण्डानां स्थितिं देवि शृणुष्व सुसमा
हिता ॥ ५५ ॥ इति श्रीस्कान्दे केदारखण्डे श्रीगंगोत्पत्तिर्नाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ ईश्वर उवाच ॥ ॥ अनंतकोटयः संति
ब्रह्माण्डानां महेश्वरि ॥ वक्तुं न शक्यते देवि स्थितिः कोटियुगैरपि ॥ १ ॥ किं ते वच्मि परं किंचिद्यच्छ्रुत्वा सर्वविद्भवेत् ॥ अस्मिन्नष्ट
मुखो ब्रह्मा देवास्तत्र महाप्रभाः ॥ २ ॥ एकादश समुद्राश्च द्वीपास्तत्संख्यका मताः ॥ लोहद्वीपस्तु प्रथमस्ताम्रद्वीपस्ततः परः ॥ ३ ॥
ततस्त्रपुमयो द्वीपो रजतस्य ततः स्मृतः ॥ स्वर्णद्वीपस्तथा ख्यातः पंचमं षष्ठकं शृणु ॥ ४ ॥ नीलद्वीपस्तथा पद्मरागो गोमेदसंज्ञकः ॥
चंद्रकांतस्तथा सूर्यकांतो नवम उच्यते ॥ ५ ॥ दशमः पुष्परागाख्यो ज्योतिरेकादशः स्मृतः ॥ एते एकादशा द्वीपाः पुण्यकर्मसु गोचराः
॥ ६ ॥ तत्तद्वर्णाः समुद्राश्च कोटियोजनविस्तृताः ॥ तत्प्रमाणं हि द्वीपानां समुद्राणां प्रकीर्त्तितम् ॥ ७ ॥ ज्योतिर्द्वीपो महाविष्णोर्ज्योती
रूपस्तु तत्र हि ॥ उपास्यमानो देवैर्हि सर्वदा वै महाप्रभैः ॥ ८ ॥ एवं सर्वेषु देवेशि ब्रह्मांडेषु च संस्थितिः ॥ यथाधिकमुखो ब्रह्मा
तथाधिकतमाः सुराः ॥ ९ ॥ द्वीपास्तथाधिका ज्ञेयाः समुद्राः सरितस्तथा ॥ सवषु तेषु भगवान् विश्वात्मा विश्वभावनः ॥ १० ॥
ब्रह्मरूपेण सृजति पाल्यते विष्णुरूपिणा ॥ रुद्ररूपेण भगवाँल्लयं नयति सर्वशः ॥ ११ ॥ स्वरूपं च निरूपं च तस्य नो ज्ञायते नीरूपं
शिवे ॥ अरूपिणो रूपमेतदकर्तुः कार्यकं तथा ॥ १२ ॥ नमस्या एव सर्वेषां देवानां च नृणां तथा ॥ न तु कश्चित्तु देवस्य रूपज्ञाता हि
कुत्रचित् ॥ १३ ॥ ध्येयध्यात्रादिभेदेन ज्ञेयज्ञात्रादिकैः प्रभुः ॥ भेदैरनेकरूपोसौ नानाजात्यादिभिर्युतः ॥ १४ ॥ स वै ब्रह्मा स वै
रुद्रः स वै विष्णुः प्रजापतिः ॥ कार्यं च कारणं चैव स एव भगवानजः ॥ १५ ॥ इति श्रीस्कान्दे केदारखंडे ब्रह्माण्डनिरूपणं नाम
तृतीयोऽध्यायः ॥ ३ ॥ ॥ श्रीपार्वत्युवाच ॥ ॥ देवदेव महादेव सर्वशास्त्रविशारद ॥ कथमेतत्समुद्भूतं त्रैलोक्यं सचराचरम् ॥ १ ॥
देवा मनुष्याः पशवो यक्षराक्षसकिन्नराः ॥ कथमंडस्य चोत्पत्तिः सर्वं विस्तरतो वद ॥ २ ॥ ईश्वर उवाच ॥ शृण देवि वरारोहे यत्पृष्टोहं
त्वया शिवे ॥ आदिसर्गमहंतावत्कथयामि समासतः ॥ ३ ॥ स्वयंभूर्भगवान् विष्णुः सिसृक्षुर्विविधाः प्रजाः ॥ आदौ ससर्ज भगवावानप

एव महात्मवान् ॥ ४ ॥ तासु वीर्यं तदा सृष्ट्वा नारायणमगात्ततः ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ ५ ॥ अयनं
तस्य ताः पूर्वं तेन नारायण स्मृतः ॥ हिरण्यवर्णमभवत्तदंडमुदकस्थितम् ॥ ६ ॥ जज्ञे तत्र स्वयं देवः स्वयंभूरितिशब्दितः ॥ हिरण्यवर्णे
च तदा उषित्वा परिवत्सरम् ॥ ७ ॥ द्विधाकरोत्तदंडं तु दिवं भुवमथापि वा ॥ खंडयोस्तु तयोर्मध्ये ह्याकाशमकरोत्प्रभुः ॥ ८ ॥ परि
प्लुतां जले पृथ्वीं दिशो वै दशधाकरोत् ॥ तत्र प्रथमतः कालं मनो वाचं ततः परम् ॥ ९ ॥ कामं क्रोधं रतिं चैव तद्रूपां सृष्टिमुत्सृजन् ॥
मरीचिरत्रिरंगिराः पुलस्त्यः पुलहः क्रतुः ॥ १० ॥ वसिष्ठश्च तथा ख्यातो ब्रह्मणो मानसात्मजाः ॥ एत एव महाभागे ब्राह्मणा ब्रह्मतेजसः
॥ ११ ॥ नारायणस्वरूपाणां सप्तानां ब्रह्मजन्मनाम् ॥ अनंतरं ततो ब्रह्मा रोषाद्रुद्रं समासृजत् ॥ १२ ॥ ततः सनत्कुमारं वै पूर्वेषामपि
पूर्वजम् ॥ सप्तैते जनयंतिस्म प्रजा रुद्रश्च पार्वति ॥ १३ ॥ स्कंदः सनत्कुमारश्च तेजः संक्षिप्य तिष्ठतः ॥ तेषां सप्त महावंशास्ते वै
देवगणान्विताः ॥ १४ ॥ प्रजावंतः क्रियावंतो नानाविद्याविशारदाः ॥ विद्युतो मेघवृंदाश्च सहेंद्रधनुषा तथा ॥ १५ ॥ पयांसि च ससर्ज्जादौ
पर्जन्यं च तथैव च ॥ ऋचो यजूंषि सामानि निर्ममे यज्ञकर्मणे ॥ १६ ॥ उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ॥ एवं तस्य
महाभागे प्रजावृद्धिरजायत ॥ १७ ॥ मनोर्देहं द्विधा कृत्वा ह्यर्धेन पुरुषोऽभवत् ॥ अर्द्धेन स्त्री तथा जातासृजद्वै विविधाः प्रजाः ॥ १८ ॥
संव्याप्य द्यावापृथिवीं महिम्ना स्वेन भूतगः ॥ विष्णुर्विराजमसृजदसृजत्पुरुषं च सः ॥ १९ ॥ तमेव पुरुषं विद्धि मनुं स्वायंभुवं प्रिये ॥
मानसं तु प्रिये सर्गं ससर्ज पुरुषः प्रभुः ॥ २० ॥ आदिसर्गमिमं श्रुत्वा धनमारोग्यमाप्नुयात् ॥ इह भुक्त्वा वरान्भोगानंते स्वर्गपुरे वसेत्
॥ २१ ॥ इति श्रीस्कांदे केदारखंडे आदिसर्गो नाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ ईश्वर उवाच ॥ ॥ संसृष्टः सुप्रजो देवि आपवः स
प्रजापतिः ॥ शतरूपां स्त्रियं लेभे पुरुषस्तामयोनिजाम् ॥ १ ॥ बहुवर्षसहस्रं सा तपःकृतवती प्रिये ॥ दिव्यं सा पुरुषं तं वै भर्तारं
प्रत्यपद्यत ॥ २ ॥ स एव पुरुषो देवि स्वायंभुव इतिश्रुतः ॥ शतरूपा तु वै देवि वीरौ पुत्रावजीजनत् ॥ ३ ॥ प्रियव्रतोत्तानपादौ काम्या
दस्मादजीजनत् ॥ कर्दमस्य सुता देवि काम्यानाम्नी महायशाः ॥ ४ ॥ प्रियव्रतं पतिं प्राप्याजनयत्सा सुतान् प्रिये ॥ सम्राजं प्रथमं

काम्या कुक्षिं चैव द्वितीयकम् ॥ ५ ॥ तृतीयं तु विराजं सा प्रभुंचैव चतुर्थकम् ॥ सूनृता धर्मकन्या च पतिमुत्तानपादकम् ॥ ६ ॥
प्राप्य तस्मात्तु चतुरः पुत्रानमिततेजसः ॥ ध्रुवं च कीर्त्तिमंतं च आयुष्मन्तं वसुं तथा ॥ ७ ॥ सूनृता सुषुवे देवि तपो बलसमन्वितान् ॥
ध्रुवो वैराग्यमापन्नस्त्यक्त्वा राज्यादिकं बहु ॥ ८ ॥ तपस्तेपे निराहारो बहुवर्षसहस्रकम् ॥ ब्रह्मा ददौ तदा तुष्टो ध्रुवायामिततेजसे ॥ ९ ॥
सप्तर्षिस्थानतोप्यूर्द्ध्वं स्थानं सर्वोत्तमं तदा ॥ यस्याद्यापि महाभागे श्लोको वै भृगुभाषितः ॥ १० ॥ अहोस्य तपसो वीर्य्यमहो श्रुतमहो
त्सवम् ॥ यमद्य पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ ११ ॥ श्रीपार्वत्युवाच ॥ अहो ध्रुवस्य चरितं श्रोतुमिच्छामि तत्वतः ॥
यथा वैराग्यमापन्नो यथाप्रातः परां गतिम् ॥ १२ ॥ एतच्छंस महादेव परं कौतूहलं हि मे ॥ ध्रुव उत्तानपादिस्तु ऋषीणामुपरि
स्थितः ॥ १३ ॥ शिव उवाच ॥ कथयामि महादेवि ध्रुवस्य चरितं तव ॥ यच्छ्रुत्वापि नरो भक्त्या प्राप्नोति भगवद्ग
तिम् ॥ १४ ॥ स्वायंभुवो मनुःपूर्वं विभजन् पृथिवीं द्विधा ॥ अर्द्धामुत्तानपादाय अर्द्धां प्रियव्रताय च ॥ १५ ॥ ययौ कैलासनि
लये तपस्तप्तुं मम प्रिये ॥ प्रियव्रतोत्तानपादा वसृजेतां प्रजास्तदा ॥ १६ ॥ सम्राजायां तु पुत्रांस्तु प्रजासर्गे नियुज्य हि ॥ स्वयं
ययौ महातीर्थे शालग्रामे तपःकरोत् ॥ १७ ॥ ध्रुवाद्यांस्तांस्तु राज्यार्द्धे नियुज्य तपसे ययौ ॥ सर्वेषां पूर्वजो भ्राता ध्रुव औत्तानपा
दिकः ॥ १८ ॥ सृष्टिभव्यं च तत्रापि चकार सुमनोहरम् ॥ ध्रुवस्तु काले कस्मिंश्चिद्गतो रण्ये मृगाय च ॥ १९ ॥ अध्वरं कर्तुमारब्धो
मृगमेधं महेश्वरि ॥ वने संगच्छतस्तस्य ददर्श सर उत्तमम् ॥ २० ॥ हंसकारंडवाकीर्णं चक्रवाकोपशोभितम् ॥ पद्मकह्लारकुमुदैः शोभमानं
समंततः ॥ २१ ॥ रम्ये सरोवरे तस्मिन्नाना शाड्वलसंवृते ॥ उपस्पृश्य जलं तत्र स्थितःश्रान्ताश्ववाहनः ॥ २२ ॥ ददर्श वनशोभां स
नानावृक्षैः समन्वितम् ॥ पश्यतस्तस्य राजर्षेर्ध्रुवस्याग्रे समाययौ ॥ २३ ॥ जराजर्जरदेहांहिवलिसंवृतविग्रहाम् ॥ जीर्णवस्त्रशतैश्छ
न्नां कांचिन्नारीं ददर्श सः ॥ २४ ॥ साप्यायया समीपं तु ध्रुवस्यवृद्धनायिका ॥ रूपयौवनसंपन्नं दृष्ट्वोवाच महेश्वरि ॥ २५ ॥ वृद्धो

वाच ॥ कोसि त्वमतिसौंदर्य्य किमर्थमागतो वनम् ॥ तव रूपमहं दृष्ट्वा काममोहवशं गता ॥ २६ ॥ त्वत्समो यदि मे भर्त्ता भ

विता नरसत्तम ॥ तदैव कृतकृत्यास्मि इत्यासीन्मतिरेव मे ॥ २७ ॥ स त्वं पुरुषशार्दूल दृष्टोसि साम्प्रतं मया ॥ याचंतीं नित
रां देव वरयस्व स्मरातुराम् ॥ २८ ॥ ईश्वर उवाच ॥ इति तस्या वचः श्रुत्वा विस्मयाविष्टमानसः ॥ चिंतयामास मनसि ध्रुव औत्ता
नपादिकः ॥ २९ ॥ विहस्य वदनं दृष्ट्वा वल्याक्रांतं गतद्युति ॥ उवाच मधुरं वृद्धां विस्मयाकुलचेतनः ॥ ३० ॥ ध्रुव उवाच ॥
दृष्टा का योग्यता भद्रे मम च स्वस्य च त्वया ॥ क्क च मे वयसो भावः क्क च ते रूपमीदृशम् ॥ ३१ ॥ जराजर्जरदेहा त्वं
क्क च मे यौवनं वयः ॥ क्क च मे सौरभं देहं मलदिग्धकलेवरम् ॥ ३२ ॥ अहो हो परमाश्चर्यं लोकेस्मिन्दृश्यते न नु ॥ मतीनां
चित्रता चैव गुणागुणविवेकिता ॥ ३३ ॥ नागुणी गुणिनं वेत्ति विरूपो रूपशालिनम् ॥ पापो वै धर्मकर्माणं स्वमेव हि प्रशंसति॥
॥ ३४ ॥ वृद्धोवाच ॥ मत्तस्तव महाबाहो कथमाधिक्यमस्ति ते ॥ यत्त्वं वदसि वयसो भावश्च मामकं वपुः ॥ ३५ ॥ युष्मदस्मदो
रूपं हि तस्यार्थः कोविदश्च कः ॥ कोहं कस्त्वामिति प्रज्ञा वर्त्तते सा मृषार्थिका ॥ ३६ ॥ पंचभूतात्मिकेनासौ देहेन परिवेष्टितः ॥
नायं वेत्ति परं भावं सप्तभिः संयुतो यदा ॥ ३७ ॥ तव यत्सुंदरं रूपं मामकं न च विद्यते ॥ मामकं वार्द्धकं रूपं तवैव विद्यते
कुतः ॥ ३८ ॥ आत्मा सर्वगतो राजन् रूपादिगुणवर्जितः ॥ न वैकवार्षिको देव न वा द्वादशवार्षिकः ॥ ३९ ॥ न बालो न युवा
वृद्धो न रूपादिविगर्हितः ॥ अरूपिणो भगवतो रूपादीनां च कल्पना ॥ ४० ॥ तथा वयोविहीनस्य कुतो वृद्धादिकं
वयः ॥ निर्लेपस्य परस्रुदः कुतो दुःखादिकल्पना ॥ ४१ ॥ इदं दुःखादिकं यत्तु राजन् तद्देहदोषजम् ॥ एको जीर्णगृहे देही ह्येको
नव्यगृहे यथा ॥ ४२ ॥ किं वै जीर्णगृहस्थस्य मानः किं परिहीयते ॥ इदं देहा किं सर्वं नवादिव्यवहारवत् ॥ ४३ ॥ तव चेत्सुंदरं
रूपं स्थिरं स्यात्तत्तथा भवेत् ॥ मामके चेन्महाभाग विरूपित्वं तदा भवेत् ॥ ४४ ॥ मदीयस्य शरीरस्य तावकस्य तथैव च ॥ का
वा विशेषता राजन् दृश्यते स्मर्यतेथवा ॥ ४५ ॥ तृष्णादिकं तु यत्सर्वं तन्ममापि तवापि हि ॥ तस्माद्राजन्न कर्त्तव्यमहंमानादिकं ॥ ४ ॥
खलु ॥ ४६ ॥ ईश्वर उवाच ॥ इति श्रुत्वा निगदितं वचो वै परमार्थवत् ॥ आश्चर्यं परमं मत्वा जगाद मधुराक्षरम् ॥ ४७ ॥

ध्रुव उवाच ॥ सत्यंब्रूहि मयेदानीं का वा त्वं परमार्थकम् ॥ कथयामास यत्सर्वं परं कौतूहलं हि मे ॥ ४८ ॥ वार्द्धकं रूपमास्थाय
आगता त्वं ममांतिके ॥ त्वया त्वनुग्रहीतोऽस्मि यया मे कथितं शुभम् ॥ ४९ ॥ वृद्धोवाच ॥ मयोक्तं यत्तु किंचिद्वै ज्ञातं च परमा
र्थकम् ॥ संतुष्टास्मि ततस्तुभ्यं वदामि स्वविचेष्टितम् ॥ ५० ॥ अहं राजन् जरा नाम्नी देव्यस्मि नरपुंगव ॥ आगता तव सामीप्यं
द्रष्टुं तव विचेष्टितम् ॥ ५१ ॥ सृष्टाः प्रजास्त्वया राजन्भुक्तं राज्यसुखं शुभम् ॥ किमिच्छसे त्वं यत्नेन मृगयासक्तमानसः
॥ ५२ ॥ बाल्यं पूर्वं यौवनं तु वार्द्धक्यं तु ततः स्मृतम् ॥ तवाक्रमणकर्त्री च जराहं नृपसत्तम ॥ ५३ ॥ कस्यापि नो महाराज रूपं मे
दर्शनं गतम् ॥ भविष्यकार्यं जनये ध्रुव औत्तानपादिक ॥ ५४ ॥ ईश्वर उवाच ॥ इतिश्रुत्वा वचस्तस्या जरायाः प्रियवादिनि ॥ वस्त्रा
दिकं तु यत्सर्वं दत्त्वा च तपसे ययौ ॥ ५५ ॥ हिमवद्दक्षिणे पार्श्वे नानामुनिगणान्विते ॥ पिंडारके महातीर्थे तपश्चक्रे ध्रुवस्ततः ॥
॥ ५६ ॥ पर्णाहारस्तु चक्रेसौ तपश्चर्यां सहस्रकम् ॥ ततो वर्षसहस्रेण निराहारो जितेंद्रियः ॥ ५७ ॥ ततो वर्षसहस्रेण पादेनैकेन
तस्थिवान् ॥ ध्रुवस्य तपसा व्याप्तं त्रैलोक्यं सचराचरम् ॥ ५८ ॥ विव्यथुः सर्वभूतानां मनांसि सुरपूजिते ॥ देवाः सर्वे महाभागे
विमानैः शतकोटिभिः ॥ ५९ ॥ आगताः शतशो द्रष्टुं ध्रुवं वै तपसि स्थितम् ॥ तं दृष्ट्वा सहसा सर्वे देवा दैत्याः सवासवाः ॥ ६० ॥
स्थातुं न शक्नुवंतस्ते तेजसा परितापिताः ॥ किंवा साविच्छते राजा तपसा तेन निश्चयम् ॥ ६१ ॥ ब्रह्मापि प्रययौ तत्र ध्रुवं द्रष्टुं महाम
तिम् ॥ उवाच मधुरं वाक्यं संतुष्टस्तपसा ततः ॥ ६२ ॥ ब्रह्मोवाच ॥ वरं वरय भद्रं ते यत्कृते तत्कृतं तपः ॥ नह्यस्ति दुर्लभं किंचित्तपस
स्ते किल ध्रुव ॥ ६३ ॥ आधिपत्यं त्रिलोकस्य प्राप्स्यसे त्वं नृपोत्तम ॥ ईदृशं तु तपो राजन्न कृतं केन चित्पुरा ॥ ६४ ॥ ईश्वर
उवाच ॥ निशम्य वचनं तस्य ब्रह्मणः परमात्मनः ॥ शनैरुन्मील्य नयने ददर्श परमेष्ठिनम् ॥ ६५ ॥ उवाच वचनं शीघ्रं प्रांजलिः
पुरतः स्थितम् ॥ भक्त्या परमया युक्तो जयेति च पुनः पुनः ॥ ६६ ॥ ध्रुव उवाच ॥ जय जय करुणानिधे भगवन् सर्वलोककर्त्तः

परमेष्ठिन् ॥ जय कमलाजने सुरेश सुरासुरपूजितपादपद्म ॥ ६७ ॥ जय सुरनरकारणकारण जय सरस्वती वरनायक प्रभो ॥ जय

सकलजनेश सुरेश जय मकरंदजय सर्वजनस्यपरमानंद ॥ ६८ ॥ जय तपोनिधिकंदर्पसुंदराशुभनाशकनायकजय सुरेश ॥ जय ऋक्षपते विपतेजयनंदनपादपपुष्पमकरंद ॥ ६९ ॥ प्रभो ब्रह्मन् किमर्थं मां पुनः संसारबंधने ॥ नियोजयसि दुःखानां सागरे पारदुर्गमे ॥ ७० ॥ वराहोऽहं यदि विभो संतुष्टोसि यदि प्रभो ॥ दीयतां दुर्लभं स्थानं पुनरावृत्तिदुर्लभम् ॥ ७१ ॥ कस्यापि प्राणिनो यत्र पीडा न स्यान्मया खलु ॥ धन्योस्मि कृतकृत्योस्मि दर्शनाद्देवनायक ॥ ७२ ॥ ब्रह्मोवाच ॥ धन्योसि कृतकृत्योसि स्वेन वै तपसा किल ॥ सप्तर्षिस्थानतश्चोर्ध्वं महास्थानं ददामि ते ॥ ७३ ॥ देवाः सुराः सगंधर्वाः सनक्षत्रास्सराशयः ॥ प्रदक्षिणं करिष्यंति त्वां चैव मुनिनायक ॥ ७४ ॥ आगच्छगच्छ भगवन् त्रैलोक्यस्थान दुर्लभम् ॥ कल्पांतेपि च्युतिर्यस्माज्जायते न विशांपते ॥ ७५ ॥ ईश्वर उवाच ॥ इत्येवं तं समारोप्य विमाने हंससंयुते ॥ सम्यक्स्थाप्य ध्रुवं तत्र ययौ ब्रह्मा चतुर्मुखः ॥ ७६ ॥ अहो भाग्यमहो भाग्यमहोवीतमहोश्रुतम् ॥ अहो तपः परं चैव यस्येयं गतिरीदृशी ॥ ७७ ॥ ज्योतिश्चक्रं महाभागे सनक्षत्रग्रहादिकम् ॥ करोत्यहर्निशं चैव प्रादक्षिण्यक्रमं प्रिये ॥ ७८ ॥ इति ते कथितं देवि ध्रुवस्य चरितं शुभम् ॥ यस्य वै श्रवणान्मर्त्योऽखिलपापैः प्रमुच्यते ॥ ७९ ॥ इति श्रीस्कांदे केदारखंडे ईश्वरपार्वतीसंवादे ध्रुवचरित्रं नाम पंचमोऽध्यायः ॥ ५ ॥ पार्वत्युवाच ॥ ध्रुवस्य संततिं देव कथयस्व ममाग्रतः ॥ सृष्टेर्भव्यस्य चोत्पत्तिं कृपया परया श्रुतः ॥ १ ॥ ईश्वर उवाच ॥ शृणु देवि वरारोहे यत्पृष्टोहं त्वया शिवे ॥ यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥ २ ॥ सृष्टिर्वै पंच पुत्रान्वै सुच्छायायां महायशाः ॥ रिपू रिपुंजयश्चैव क्षिप्रो वृकल एव च ॥ ३ ॥ वृकतेजास्तथा ख्यातः सृष्टिपुत्राः समीरिताः ॥ बृहती चाक्षुषं पुत्रं रिपोः सर्वोत्तमं मनुम् ॥ ४ ॥ जनयामास सुश्रोणि सुश्रोणी प्रियवादिनी ॥ अजीजनत्पुष्करिण्यामनरण्यंतु चाक्षुषः ॥ ५ ॥ अनरण्यो महाभागेनड्वलायां प्रजापतिः ॥ दश पुत्रान्महाभागानङ्गाद्यान्विश्रुतेजसः ॥ ६ ॥ अंगस्तु वेनमेकं तु सुनीथाजनयत्सुतम् ॥ अपचारेण वेनस्य मुनीनां कोपतो भृशम् ॥ ७ ॥ अनौरसी प्रजासृष्टिर्जाता वेनस्य राजते ॥ प्रजार्थमृषयः सर्वे करं वै दक्षिणं तदा ॥ ८ ॥ ममंथुर्मिलिताः शाश्वतत्वरूपा महेश्वरि ॥ मथिते तु करे तस्य

संबभूव महाकृतिः ॥ ९ ॥ तं दृष्ट्वा मुनयः सर्वे मुदिता ब्रह्मवादिनः ॥ एक एव महाबाहुः प्रजासर्गं करिष्यति ॥ १० ॥ प्राप्स्यते च
यशः श्रेष्ठं त्रिषु लोकेषु विश्रुतः ॥ इत्युक्तवंतो मुनयः प्रशशंसुर्मुदान्विताः ॥ ११ ॥ स धन्वी कवची जातस्तेजसा द्योतय
न्दिशः ॥ पृथुः पृथुयशस्त्वात्तु बभूव नृपसत्तमः ॥ १२ ॥ राजसूयाभिषिक्तानां राज्ञामाद्यो जनेश्वरः ॥ तेनेयं पृथुना देवि दुग्धा गौर्वृत्तये
नृणाम् ॥ १३ ॥ सस्याय सर्वजंतूनां पालनाय महाद्युतिः ॥ ततो देवैर्मुनिगणैः पितृभिर्यक्षदानवैः ॥ १४ ॥ गंधर्वैः साप्सरोभिश्च सर्वैः
पुण्यजनैस्तथा ॥ वीरुद्भिः पर्वतैश्चैव दोहिता सावसुंधरा ॥ १५ ॥ ददौ क्षीरं महादेवी तेन प्राणानधारयत् ॥ धर्मज्ञौ तु पृथोः पुत्रौ
जज्ञाते पुरुषर्षभौ ॥ १६ ॥ शिखंडी च हरिर्धामा प्रजापालौ महाद्युती ॥ षडाग्नेयीहविर्धानात्प्राचीनबर्हिरादिकान् ॥ १७ ॥ षट् पुत्राणां
महाभागे तेषां श्रेष्ठतरो विभुः ॥ प्राचीनबर्हिरभवत् प्रजापतिरकल्मषः ॥ १८ ॥ समुद्रद्वीपसहितां पालयामास सर्वतः ॥ कृतदारो
महातेजा यशोव्याप्तदिगंतरः ॥ १९ ॥ प्राचीनबर्हिषो देवि सवर्णा तस्य चांगना ॥ दश प्रचेतसो नाम जनयामास पुत्रकान् ॥ २० ॥
सर्वे शास्त्रार्थतत्त्वज्ञा धनुर्वेदविशारदाः ॥ त एकधर्माचरणास्तपस्तेपुर्महत्तरम् ॥ २१ ॥ दशवर्षसहस्राणि समुद्रस्य जले स्थिताः ॥
तत्र तेषु प्रचेतस्सु बभूवाथ प्रजाक्षयः ॥ २२ ॥ वर्द्धंत एव वृक्षास्तु अकुर्वंत प्रजाक्षयम् ॥ नाशकन्वायवो वातुं नभस्तैः संवृतं तथा ॥
॥ २३ ॥ वर्षाणामयुतं देवि न शेकुश्चेष्टितुं प्रजाः ॥ इति श्रुत्वा महात्मानस्तपसा दग्धकिल्बिषाः ॥ २४ ॥ मुखेभ्यः ससृजुर्वायुं वह्निं
चंद्रं महेश्वरि ॥ उन्मूलनं वायुरग्रे कृत्वा वृक्षांस्तु सर्वतः ॥ २५ ॥ ततोऽग्निर्दाहयामास चटिच्चटिति सर्वतः ॥ द्रुमक्षये ततो जाते शेषा वै
शाखिनोऽब्रुवन् ॥ २६ ॥ चंद्रं चैव स्वराजानं रक्षरक्षेति. चासकृत् ॥ उपगम्य शनैः सोम उवाच च प्रजापतीन् ॥ २७ ॥ शृणुध्वं
वचनं चेदं सर्वे प्राचीनबर्हिषः ॥ कोपं त्यजत वृक्षेभ्यः शेषेभ्यः पुरुषर्षभाः ॥ २८ ॥ कन्यामेते प्रयच्छंति शाम्येतामग्निमारुतौ ॥ कन्या
रत्नमिदं तात वृक्षाणां परमाद्भुतम् ॥ २९ ॥ भविष्यं जानता गर्भे वृत्तान्तत्वं प्रचेतसः ॥ मारिषेति समाख्याता रूपेणाप्रतिमा भुवि ॥
॥ ३० ॥ सर्वेषां भो महाभागा भार्यास्तु वरवर्णिनी ॥ युष्माकं तेजसोऽर्द्धेन मम चार्द्धेन मानदाः ॥ ३१ ॥ अस्यामेवोत्पत्स्यते वै

दक्षोनाम प्रजापतिः ॥ अग्नितेजाः स एवायं प्रजाः संवर्द्धयिष्यति ॥ ३२ ॥ सोमस्य च वचः श्रुत्वा जगृहुस्ते ततः सुताम् ॥ मारिषां नामतो देवि सर्ववंशविवर्द्धिनीम् ॥ ३३ ॥ कोपं संगृह्य वृक्षेभ्यो वायुं वह्निं निवार्य्यच ॥ दशभ्यस्तु प्रचेतोभ्योगर्भं प्राप च मारिषा ॥ ३४ ॥ ततस्तु दशमे मासि दक्षं प्रासूतवै सुतम् ॥ दक्षोपि स महातेजाः सोमस्यांशेन पार्वति ॥ ३५ ॥ पुत्रानुत्पादयामास सर्वं वंशविवर्द्धनान् ॥ स्थावरांश्च चरांश्चैव द्विपदांश्च चतुष्पदः ॥ ३६ ॥ पूर्वं वै मानसान्पूर्वं पश्चादसृजत स्त्रियः ॥ ततो ददौ तु धर्माय दश कन्याः सुदर्शनाः ॥ ३७ ॥ कश्यपाय तथा कन्यास्त्रयोदश महाप्रभुः ॥ सोमाय च ददौ कन्याः सप्तविंशतिरेव च ॥ ३८ ॥ अश्विन्याद्या महाभागे ताभ्यो जातास्ततःप्रजाः ॥ देवा नागास्तथा गावो दैत्यदानवकिन्नराः ॥ ३९ ॥ गंधर्वाप्सरसश्चैव जातास्ताभ्यो महेश्वरि ॥ तत एव समा जाताः प्रजा मैथुनसंभवाः ॥ ४० ॥ पूर्वं वै मानसादेव स्मरणाद्दर्शनादपि ॥ इति ते कथितो देवि प्रजासर्गो मया प्रिये ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते स्मरणादपि ॥ ४१ ॥ इति श्रीस्कान्दे केदारखंडे प्रजासर्गो नाम षष्ठोऽध्यायः ॥ ६ ॥

॥ श्रीपार्वत्युवाच ॥ ॥ त्वत्त एव महादेव देवोत्पत्तिर्मया श्रुता ॥ ब्रह्मणो दक्षिणांगुष्ठाद्वामांगुष्ठात्स्त्रियस्तथा ॥ १ ॥ यदुक्ता मारिषानाम वार्क्षी सोमस्य तेजसा ॥ तस्यां दक्षो महातेजाश्चंद्रश्च सुरतां गतः ॥ २ ॥ एतन्मे संशयं छिंधि यदि भक्तेषु ते दया ॥ त्वमेव सर्वलोकानां सर्वज्ञोसि महेश्वर ॥ ३ ॥ ईश्वर उवाच ॥ शृणु देवि प्रवक्ष्यामि यत्पृष्टोहं त्वया शिवे ॥ बह्वयश्च सृष्टयो नष्टा ब्रह्मणश्च तथैव च ॥ ४ ॥ उत्पत्तिः प्रलयश्चैव नियतं दिनरात्रिवत् ॥ दक्षादयो नृपा जाताः कालेकाले सदा प्रिये ॥ ५ ॥ कदाचिद्ब्रह्मणोंगुष्ठान्मारिषायास्तथैव च ॥ मत्तश्चैव कदाचित्तु मनसो ब्रह्मणस्तथा ॥ ६ ॥ ज्यैष्ठ्यं कानिष्ठ्यकं देवि मनुष्याणां महेश्वरि ॥ ये मायामोहसंच्छन्ना न जानंति परात्परम् ॥ ७ ॥ आत्मा एकः सर्वव्यापी नित्योव्यक्तो निरंजनः ॥ यदा प्रकृतिसंयुक्तो भूतानि स्रष्टुमिच्छति ॥ ८ ॥ येन केनाप्युपायेन सृजते सचराचरम् ॥ तप एव महाभागे सर्वेभ्यो बलवत्तरम् ॥ ९ ॥ इति श्रीस्कांदे केदारखंडे सप्तमोऽध्यायः ॥ ७ ॥ 



श्रीपार्वत्युवाच ॥ ॥ देवानां दानवानां च दैत्यानां यक्षरक्षसाम् ॥ उत्पत्तिं विस्तरेणैव कथयस्व मम प्रभो ॥ १ ॥ ईश्वर उवाच ॥

दक्षो नाम प्रजानाथश्चिकीर्षुर्विविधाः प्रजाः ॥ अजीजनत् सहस्रं वै पुत्राणां सृष्टिकर्मणि ॥ २ ॥ तानागत्य महातेजा नारदो भगवा
नृषिः ॥ उवाच वचनं चेदं विहस्यच पुनः पुनः ॥ ३ ॥ नारद उवाच ॥ शृणुध्वं वचनं सर्वे दाक्षेयाः सृष्टिकर्मणि ॥ यूयं नियुक्ता दक्षेण
कथं कुरुत बालिशाः ॥ ४ ॥ जानीध्वं पृथिव्या अंतं कुरुध्वं सृष्टिकर्म च ॥ विनाज्ञानं प्रमाणस्य प्रजासर्गो न जायते ॥ ५ ॥
ईश्वर उवाच ॥ इत्याज्ञप्तं नारदेन श्रुत्वा ते दक्षपुत्रकाः ॥ गता द्रष्टुं प्रमाणं वै पृथिव्या जगदीश्वरि ॥ ६ ॥ अद्यापि न निवर्त्तंते समुद्रेभ्य
इवापगाः ॥ अथ पुत्रेषु नष्टेषु दक्षः प्राचेतसो मुनिः ॥ ७ ॥ पुनर्दशशतं चैव पुत्रांश्चैवासृजत्प्रभुः ॥ पुनर्वै नारदेनोक्ता गता वै सर्वतो
दिशम् ॥ ८ ॥ पुनस्तेष्वपि नष्टेषु दक्षः क्रुद्धोऽब्रवीद्वचः ॥ नारदं पुत्रहंतारं गर्भवासं व्रजेति च ॥ ९ ॥ पुनर्दक्षो महातेजाः कन्या वै षष्टि
संख्यकाः ॥ ताः कन्याः कतिचिद्देवि कश्यपो नाम वै मुनिः ॥ १० ॥ धर्माय दत्ता सोमाय चतस्रोऽरिष्टनेमिने ॥ चतस्रोभृगुपुत्राय द्वे वै
चांगिरसे तथा ॥ ११ ॥ द्वे कृशाश्वाय मुनये नामानि च तथा शृणु ॥ दितिश्च अदितिश्चैव कद्रुश्च विनता तथा ॥ १२ ॥ सुरभिः सुरसारिष्टा
दनुः क्रोधवशा इरा ॥ मुनिर्वंशा विश्वनाम तास्वपत्यानि मे शृणु ॥ १३ ॥ दितिर्वै जनयामास पुत्रानमिततेजसः ॥ शक्रो विष्णुश्च जज्ञाते
शृण्वदित्यास्तथैव च ॥ १४ ॥ धातार्यमा च त्वष्टा च पूषा वै वरुणस्तथा ॥ विवस्वान् सविता मित्रो भगोंशश्च महाबलः ॥ १५ ॥ रविश्च
द्वादशादित्याः कथिताश्चाक्षुषोंतरे ॥ दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम् ॥ हिरण्यकशिपुश्चैव हिरण्याक्षश्च पार्वति ॥ १६ ॥ सिं
हिकाचाभवत् कन्या ददौ तां विप्रचित्तये ॥ तस्याः पुत्रास्तदाजाताः सैंहिकेया महाबलाः ॥ १७ ॥ संख्यया दशसाहस्रं विप्रचित्तेर्महा
बलात् ॥ हिरण्यकशिपोः पुत्राश्चत्वारोमितविक्रमाः ॥ १८ ॥ अनुह्लादश्च प्रह्लादो ह्लादः संह्लाद एव च ॥ अनुह्लादस्य पुत्रास्तु महानासो
भयानकाः ॥ १९ ॥ कौलश्चैव महाशब्दो बभूवुरमितौजसः ॥ विरोचनस्तु प्राह्लादिर्विरोचनसुतो बलिः ॥ २० ॥ बाणाद्यं वै पुत्रशतं
बलेरासीन् महात्मनः ॥ हिरण्याक्षसुताः पंच महात्मानो महाबलाः ॥ २१ ॥ झर्झरः शकुनिश्चैव शंकुशीर्षो महानदः ॥ विक्रांतः काल

नाभश्च धनुर्वेदविशारदाः ॥ २२ ॥ कद्र्वाः पुत्रान् महाभागे निबोध मम सांप्रतम् ॥ अनंता वासुकिश्चैव एलापुत्रो धनंजयः ॥ २३ ॥

दक्षोनाम प्रजापतिः ॥ अग्नितेजाः स एवायं प्रजाः संवर्द्धयिष्यति ॥ ३२ ॥ सोमस्य च वचः श्रुत्वा जगृहुस्ते ततः सुताम् ॥ मारिषां
नामतो देवि सर्ववंशविवर्द्धिनीम् ॥ ३३ ॥ कोपं संगृह्य वृक्षेभ्यो वायुं वह्निं निवार्य्यच ॥ दशभ्यस्तु प्रचेतोभ्योगर्भं प्राप च मारिषा ॥
॥ ३४ ॥ ततस्तु दशमे मासि दक्षं प्रासूतवै सुतम् ॥ दक्षोपि स महातेजाः सोमस्यांशेन पार्वति ॥ ३५ ॥ पुत्रानुत्पादयामास सर्वं
वंशविवर्द्धनान् ॥ स्थावरांश्च चरांश्चैव द्विपदांश्च चतुष्पदः ॥ ३६ ॥ पूर्वं वै मानसान्पूर्वं पश्चादसृजत स्त्रियः ॥ ततो ददौ तु धर्माय
दश कन्याः सुदर्शनाः ॥ ३७ ॥ कश्यपाय तथा कन्यास्त्रयोदश महाप्रभुः ॥ सोमाय च ददौ कन्याः सप्तविंशतिरेव च ॥ ३८ ॥ अ
श्विन्याद्या महाभागे ताभ्यो जातास्ततःप्रजाः ॥ देवा नागास्तथा गावो दैत्यदानवकिन्नराः ॥ ३९ ॥ गंधर्वाप्सरसश्चैव जातास्ताभ्यो
महेश्वरि ॥ तत एव समा जाताः प्रजा मैथुनसंभवाः ॥ ४० ॥ पूर्वं वै मानसादेव स्मरणाद्दर्शनादपि ॥ इति ते कथितो देवि प्रजासर्गो
मया प्रिये ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते स्मरणादपि ॥ ४१ ॥ इति श्रीस्कान्दे केदारखंडे प्रजासर्गो नाम षष्ठोऽध्यायः ॥ ६ ॥
॥ श्रीपार्वत्युवाच ॥ ॥ त्वत्त एव महादेव देवोत्पत्तिर्मया श्रुता ॥ ब्रह्मणो दक्षिणांगुष्ठाद्वामांगुष्ठात्स्त्रियस्तथा ॥ १ ॥ यदुक्ता मारिषानाम
वार्क्षी सोमस्य तेजसा ॥ तस्यां दक्षो महातेजाश्चंद्रश्च सुरतां गतः ॥ २ ॥ एतन्मे संशयं छिंधि यदि भक्तेषु ते दया ॥ त्वमेव सर्वं
लोकानां सर्वज्ञोसि महेश्वर ॥ ३ ॥ ईश्वर उवाच ॥ शृणु देवि प्रवक्ष्यामि यत्पृष्टोहं त्वया शिवे ॥ बह्वयश्च सृष्टयो नष्टा ब्रह्मणश्च तथैव
च ॥ ४ ॥ उत्पत्तिः प्रलयश्चैव नियतं दिनरात्रिवत् ॥ दक्षादयो नृपा जाताः कालेकाले सदा प्रिये ॥ ५ ॥ कदाचिद्ब्रह्मणोंगुष्ठान्मारि
षायास्तथैव च ॥ मत्तश्चैव कदाचित्तु मनसो ब्रह्मणस्तथा ॥ ६ ॥ ज्यैष्ठ्यं कानिष्ठ्यकं देवि मनुष्याणां महेश्वरि ॥ ये मायामोहसंच्छन्ना
न जानंति परात्परम् ॥ ७ ॥ आत्मा एकः सर्वव्यापी नित्योव्यक्तो निरंजनः ॥ यदा प्रकृतिसंयुक्तो भूतानि स्रष्टुमिच्छति ॥ ८ ॥ येन
केनाप्युपायेन सृजते सचराचरम् ॥ तप एव महाभागे सर्वेभ्यो बलवत्तरम् ॥ ९ ॥ इति श्रीस्कांदे केदारखंडे सप्तमोऽध्यायः ॥ ७ ॥
श्रीपार्वत्युवाच ॥ ॥ देवानां दानवानां च दैत्यानां यक्षरक्षसाम् ॥ उत्पत्तिं विस्तरेणैव कथयस्व मम प्रभो ॥ १ ॥ ईश्वर उवाच ॥

दक्षो नाम प्रजानाथश्चिकीर्षुर्विविधाः प्रजाः ॥ अजीजनत् सहस्रं वै पुत्राणां सृष्टिकर्मणि ॥ २ ॥ तानागत्य महातेजा नारदो भगवा
नृषिः ॥ उवाच वचनं चेदं विहस्यच पुनः पुनः ॥ ३ ॥ नारद उवाच ॥ शृणुध्वं वचनं सर्वे दाक्षेयाः सृष्टिकर्मणि ॥ यूयं नियुक्ता दक्षेण
कथं कुरुत बालिशाः ॥ ४ ॥ जानीध्वं पृथिव्या अंतं कुरुध्वं सृष्टिकर्म च ॥ विनाज्ञानं प्रमाणस्य प्रजासर्गो न जायते ॥ ५ ॥
ईश्वर उवाच ॥ इत्याज्ञप्तं नारदेन श्रुत्वा ते दक्षपुत्रकाः ॥ गता द्रष्टुं प्रमाणं वै पृथिव्या जगदीश्वरि ॥ ६ ॥ अद्यापि न निवर्तंते समुद्रेभ्य
इवापगाः ॥ अथ पुत्रेषु नष्टेषु दक्षः प्राचेतसो मुनिः ॥ ७ ॥ पुनर्दशशतं चैव पुत्रांश्चैवासृजत्प्रभुः ॥ पुनर्वै नारदेनोक्ता गता वै सर्वतो
दिशम् ॥ ८ ॥ पुनस्तेष्वपि नष्टेषु दक्षः क्रुद्धोऽब्रवीद्वचः ॥ नारदं पुत्रहंतारं गर्भवासं व्रजेति च ॥ ९ ॥ पुनर्दक्षो महातेजाः कन्या वै षष्टि
संख्यकाः ॥ ताः कन्याः कतिचिद्देवि कश्यपो नाम वै मुनिः ॥ १० ॥ धर्माय दत्ता सोमाय चतस्रोऽरिष्टनेमिने ॥ चतस्रोभृगुपुत्राय द्वे वै
चांगिरसे तथा ॥ ११ ॥ द्वे कृशाश्वाय मुनये नामानि च तथा शृणु ॥ दितिश्च अदितिश्चैव कद्रुश्च विनता तथा ॥ १२ ॥ सुरभिः सुरसारिष्टा
दनुः क्रोधवशा इरा ॥ मुनिर्वंशा विश्वनाम तास्वपत्यानि मे शृणु ॥ १३ ॥ दितिर्वैजनयामास पुत्रानमिततेजसः ॥ शक्रो विष्णुश्च जज्ञाते
शृण्वदित्यास्तथैव च ॥ १४ ॥ धातार्यमा च त्वष्टा च पूषा वै वरुणस्तथा ॥ विवस्वान् सविता मित्रो भगोंशश्च महाबलः ॥ १५ ॥ रविश्च
द्वादशादित्याः कथिताश्चाक्षुषोंतरे ॥ दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम् ॥ हिरण्यकशिपुश्चैव हिरण्याक्षश्च पार्वति ॥ १६ ॥ सिं
हिकाचाभवत् कन्या ददौ तां विप्रचित्तये ॥ तस्याः पुत्रास्तदाजाताः सैंहिकेया महाबलाः ॥ १७ ॥ संख्यया दशसाहस्रं विप्रचित्तेर्महा
बलात् ॥ हिरण्यकशिपोः पुत्राश्चत्वारोमितविक्रमाः ॥ १८ ॥ अनुह्लादश्च प्रह्लादो ह्लादः संह्लाद एव च ॥ अनुह्लादस्य पुत्रास्तु महानासो
भयानकाः ॥ १९ ॥ कौलश्चैव महाशब्दो बभूवुरमितौजसः ॥ विरोचनस्तु प्राह्लादिर्विरोचनसुतो बलिः ॥ २० ॥ बाणाद्यं वै पुत्रशतं
बलेरासीन् महात्मनः ॥ हिरण्याक्षसुताः पंच महात्मानो महाबलाः ॥ २१ ॥ झर्झरः शकुनिश्चैव शंकुशीर्षो महानदः ॥ विक्रांतः काल

नाभश्च धनुर्वेदविशारदाः ॥ २२ ॥ कद्रोःपुत्रान् महाभागे निबोध मम सांप्रतम् ॥ अनंता वासुकिश्चैव एलापुत्रो धनंजयः ॥ २३ ॥

काद्रवेया महात्मान इत्याद्याः कद्रुपुत्रकाः ॥ विनता गरुडं चैव ह्यरुणं च महाबलम् ॥ २४ ॥ द्वौ पुत्रौ जनयामास तयोर्वै पुत्रसंततिः ॥
सुरैरेकादशप्रोक्ता रुद्रा जातास्तु कश्यपात् ॥ २५ ॥ हरश्च बहुरूपश्च कपर्दी त्र्यंबकस्तथा ॥ वृषाकपिश्च शंभुश्च मृगव्याधो पराजितः ॥
॥ २६ ॥ कलापीरैवतःसर्पौ रुद्रा एकादश स्मृताः ॥ सुरसायास्तु सर्पास्तु जातास्तेहिविषोल्बणाः ॥ २७ ॥ दनोस्तु दानवाः प्रोक्ताः
शृणु श्रेष्ठान् महाबलान् ॥ विप्रचित्तिर्द्विमूर्द्धा च शंकुकर्णो गवेथिकः ॥ २८ ॥ अयोमुखः शंबरश्च कपिलो वामनस्तथा ॥ स्वर्भानु
र्वज्रनाभश्च शरभः शैलभादिकाः ॥ २९ ॥ दानवास्तु समाख्याता महाबलपराक्रमाः ॥ तेषां वै पुत्रपौत्राणां संख्यां कर्तुं न विद्यते ॥
॥ ३० ॥ स्वर्भानोस्तु प्रभाकन्या पुलोम्नस्तु शची मता ॥ पौलोमाः कालकेयाश्च हिरण्यकशिपो पुरेः ॥ ३१ ॥ संख्यया दशसाहस्रं
सहस्रं च प्रकीर्त्तितम् ॥ मुनेस्तु मुनयः ख्याता अरिष्टातश्चराचराः ॥ ३२ ॥ एतासामेव सर्वेहि जगदेतच्चराचरम् ॥ किन्नरायक्षरक्षांसि
ताभ्यो जाता महाबलाः ॥ ३३ ॥ वृक्षाश्च पर्वताश्चैव पक्षिणश्च चतुष्पदाः ॥ इति ते कथितं देवि दैत्यदानवरक्षसाम् ॥ पठतां शृण्वतां
चैव स्वर्गस्य फलदायकम् ॥ ३४ ॥ इति श्रीस्कांदे केदारखंडे अष्टमोऽध्यायः ॥ ८ ॥ ॥ पार्वत्युवाच ॥ ॥ देवदेव महादेव
सर्वशास्त्रार्थपारग ॥ मन्वंतराणि सर्वाणि कथय त्वं मम प्रभो ॥ १ ॥ देवांश्च मुनिवर्यांश्च देवेंद्रांश्च तथैव च ॥ स्वायंभुवमनोर्देव सर्वं
कथय सुव्रत ॥ २ ॥ ईश्वरउवाच ॥ कथयामि महेशानि मनूनां गणनां प्रिये ॥ स्वायंभुवमनुः पूर्वं स्वारोचिषमनुस्तथा ॥ ३ ॥ औत्त
मिस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥ वैवस्वतमनुर्देवि सांप्रतं सप्तमो ह्ययम् ॥ ४ ॥ सावर्णिर्दक्षसावर्णिः सूर्यसावर्णि रेवच ॥ मेरुसावर्णि
श्वतथा भौत्यो गैव्यस्तथैव च ॥ ५ ॥ रौच्यश्च हि महाभागे कथिता मनवोमया ॥ आदिमन्वन्तरे देवि सप्तर्षीन् शृणु मे प्रिये ॥ ६ ॥
मरीचिरत्रिरंगिराः पुलस्त्यः पुलहः क्रतुः ॥ वसिष्ठश्च महातेजा एते सप्तर्षयस्तथा ॥ ७ ॥ ते वै सप्तर्षयो नित्यमुत्तरस्यां दिशि स्थिताः ॥
याम्या देवास्तथा नाम्ना ख्याताः स्वायंभुवेंतरे ॥ ८ ॥ अग्नीध्रश्चाग्निबाहुश्च वसुर्मेधातिथिस्तथा ॥ मेधा हव्यश्च ज्योतिष्मान् द्युतिमान् ॥ ७ ॥
सवनस्तथा ॥ ९ ॥ पुत्रश्चैव तथा ख्यातो दशपुत्रा महाबलाः ॥ मनोः स्वायंभुवस्यैते कथितास्तव शैलजे ॥ १० ॥ तेषामेव हि

वंशेन त्रैलोक्यं पूरितं तथा ॥ इति ते प्रथमं देवि मन्वंतरमुदाहृतम् ॥ ११ ॥ स्वारोचिषं द्वितीयं तु शृणु सांप्रतमुच्यते ॥ और्वो वसि
ष्ठपुत्रश्च काश्यपः सांब एव च ॥ १२ ॥ दत्तो बृहस्पतिश्चैव प्राणो निश्च्यवनस्तथा ॥ एते सप्तर्षयःप्रोक्ता मयास्वारोचिषेंतरे ॥ १३ ॥ देवा
ख्यातास्तथा देवितुषिता नाम सुव्रताः ॥ हविघ्रः सुकृतिर्भूतिर्नमस्यः प्रथितो नभः ॥ १४ ॥ आपो मूर्त्तिरपः सूर्यः स्वारोचिषसुताः
स्मृताः ॥ तैरेव प्रथिता भूमिः सप्तद्वीपा सपर्वता ॥ १५ ॥ मन्वंतरं तृतीयं तु वक्ष्यामि तन्निबोध च ॥ वसिष्ठस्य सुताः सप्त वासिष्ठा
इति विश्रुताः ॥ १६ ॥ ऊर्जा नाम सुरा ख्याता हिरण्यगर्भसूनवः ॥ ईषऊर्जस्तनूजश्च माधवो मधुरेव च ॥ १७ ॥ सहः शुक्रः शुचिश्चैव
नभस्यो नभ एव च ॥ एते पुत्रास्तव ख्याता दश चैव महाबलाः ॥ १८ ॥ तृतीयमिति ते प्रोक्तं चतुर्थं शृणु सांप्रतम् ॥ अग्निः काव्यः
पृथुश्चैव जह्नुर्धाता च पार्वति ॥ १९ ॥ कापीवानकपीवांश्च एते सप्तर्षयः स्मृताः ॥ सत्या देवगणाः ख्याता मया ते तामसांतरे ॥ २० ॥
तामसस्य मनोः पुत्रान् शृणु देवि यथातथम् ॥ द्युतिस्तपस्यः सुतपास्तपोमूलः परंतपः ॥ २१ ॥ तपोधनस्तपःप्रीतिरकल्माषस्तथा
स्मृतः ॥ तन्वीधन्वी तथा ख्यातौ तामसस्य सुता दश ॥ २२ ॥ चतुर्थं कथितं देवि मन्वंतरं च तामसम् ॥ पंचमं रैभ्यकं नाम शृणु
सांप्रतमुच्यते ॥ २३ ॥ वेदबाहुः सुबाहुश्च वेदशीर्षो मुनिस्तथा ॥ हिरण्यरोमा पर्जन्य ऊर्ध्वबाहुश्च सोमजः ॥ २४ ॥ सप्तर्षयो हि रैभ्य
स्य मनोरंतर एव च ॥ प्रकृतयो भूतरसा देवाः ख्याता महौजसः ॥ २५ ॥ पुत्रान्निबोध रैभ्यस्य विस्तराद्गदतो मम ॥ धृतिर्निरुत्सुको
नव्यस्तत्त्वदर्शी महाबलः ॥ २६ ॥ अरण्यश्च प्रकारश्च नेमिकः सत्यवाग्धृतिः ॥ इत्ये ते कथिताः पुत्राः रैवतस्य महात्मनः ॥ २७ ॥
पंचमं कथितं ते वै षष्ठं च शृणु कथ्यते ॥ भृगुर्नगो विवस्वांश्च विरजा अतिनामकः ॥ २८ ॥ सुधामा च सहिष्णुश्च ऋषयो वै तव
स्मृताः ॥ आद्याः प्रसूता ऋभवः पृथग्भावा महौजसः ॥ २९ ॥ लेखा वै देवताः ख्याताश्चाक्षुषस्यांतरे मनोः ॥ शाड्वलेयास्तथाख्याता
अंगिराः पुत्रकास्तथा ॥ ३० ॥ ऊरुप्रभृतयो देवि मनुपुत्रास्तथा स्मृताः ॥ इति षष्ठं समाख्यातं चाक्षुषांतरमीरितम् ॥ ३१ ॥ विद्यमानं
सप्तमं च शृणु वैवस्वतेऽन्तरे ॥ अत्रिर्वसिष्ठो भगवान् गौतमः कश्यपस्तथा ॥ ३२ ॥ विश्वामित्रो भरद्वाजो यमदग्निस्तथैव च ॥ सप्तर्षयः

प्रकथिता मया वैवस्वतेन्तरे ॥ ३३ ॥ साध्यां विश्वेच रुद्राश्च मरुतो वसवस्तथा ॥ आदित्याश्चाश्विनौ देवा ख्याता वैवस्वतेन्तरे ॥३४॥
इक्ष्वाकाद्या मनोः पुत्राः सर्वधर्मभृतां वराः ॥ तेषां पुत्रैश्च पौत्रैश्च सप्तद्वीपास्तताःप्रिये ॥ ३५ ॥ पार्वत्युवाच ॥ देवदेव समुत्पत्तिं वैवस्व
तमनोः प्रभो ॥ यस्येयं सांप्रतं भूमिर्व्याप्ता पुत्रशतैस्तथा ॥ ३६ ॥ ईश्वर उवाच ॥ शृणु देवि वरारोहे वैस्वतमनुं प्रिये ॥ कश्यपात्तु महे
शानि विवस्वान् समजायत ॥ ३७ ॥ दाक्षायण्यामदित्यां तु प्रभाव्याप्तदिगंतरः ॥ त्वष्टुः प्रजापतेः कन्या संज्ञानाम्नी महायशाः ॥ ३८ ॥
उपयेमे विवस्वांस्तां वेदोक्तविधिना प्रिये ॥ सा च त्वाष्ट्री महादेवि तेजस्तस्य विवस्वतः ॥ असहंती नित्यमेव स्थिता तस्य गृहे प्रिये ॥
॥ ३९ ॥ द्वौ पुत्रौ जनयामास पूर्वं वैवस्वतं मनुम् ॥ ततो यमं च यमुनां यमौ तादृक्विवस्वतः ॥ ४० ॥ तस्य सूर्यस्य नितरां तेजसा
तापिताभवत् ॥ असहंती तु तत्तेजश्छायां स्त्रीं सा जगाद ह ॥ अश्रुसंरुद्धवदनां स्वरूपसदृशां प्रिये ॥ ४१ ॥ संज्ञोवाच ॥ शृणु च्छाये
महाभागे त्वत्तो नान्या मम प्रिया ॥ दुःखहंत्री स्वभर्तुश्च असहंती बलं शुभे ॥ ४२ ॥ तस्य वै तेजसा दग्धा स्थातुं शक्नोमि न प्रिये ॥
किं करोमि क्व गच्छामि इति मे दुःखवैभवम् ॥ ४३ ॥ तस्मात्त्वं तिष्ठ भर्तुर्मे सविधं नित्यमेव हि ॥ मम चेष्टाबलं रूपं कृत्वा तु मम
वल्लभे ॥ ४४ ॥ अहं यास्यामि भवनं पितुर्वै विश्वकर्मणः ॥ तत्र स्थेयं मया नित्यं रहस्यं परमं त्विदम् ॥ ४५ ॥ गोपनीयं प्रयत्नेन
यथाजानातु नो पतिः ॥ अपत्येषु मम च्छाये भवितव्यं प्रियं सखि ॥ ४६ ॥ छायोवाच ॥ आशापं हि मया नैव आकचग्रहणादपि ॥
न वक्तव्यं मया देवि गच्छ त्वं हि यथासुखम् ॥ ४७ ॥ ईश्वर उवाच ॥ सवर्णां तु समाधाय गता सा भवनं पितुः ॥ ववंदे चरणौ त्वष्टुः
पितुर्वै विश्वकर्मणः ॥ ४८ ॥ दृष्ट्वा तां तु सुतां स्वीयां संशयाविष्टमानसः ॥ उवाच वचनं चेदं संज्ञानाम्नीं महाप्रभाम् ॥ ४९ ॥ विश्वकर्मो
वाच ॥ किमर्थमागता संज्ञे किं कार्यं ते मया सुते ॥ दत्ता त्रैलोक्यदीपाय सूर्यायामिततेजसे ॥ ५० ॥ भर्तारं त्यज्य या नारी गच्छेद्वै
परमंदिरे ॥ तस्या मुखं हि नालोक्यं सुधिया मम पुत्रिके ॥ ५१ ॥ गच्छ शीघ्रं हि तत्रैव यतस्त्वं आगता मम ॥ सेवनीयौ प्रयत्नेन भर्तुर्वै
चरणौ सुते ॥ ५२ ॥ संज्ञोवाच ॥ तेजसा तस्य देवस्य तापिताहं प्रजापते ॥ न शक्ता तस्य सामीप्ये क्षणं स्थातुं पितः प्रभोः ॥ ५३ ॥

यद्यत्र तात न स्थेयं मया तव समीपकम् ॥ तपस्तप्तुं गमिष्यामि संततिर्वर्त्तते मम ॥ ५४ ॥ ईश्वर उवाच ॥ इत्युक्का सा तु सहसा
निपत्य चरणौ पितुः ॥ गतोत्तरकुरूँश्चैव सुरम्यान्मन सेप्सितान् ॥ ५५ ॥ तत्र गत्वा तु सा त्वाष्ट्री वडवारूपमास्थिता ॥ तपस्तेपे शंक
माना स्वरूपात् पर्वतात्मजे ॥ ५६ ॥ सापि छाया महाभागे ह्यभेदेन समीपकम् ॥ भर्तुर्विवस्वतो नित्यं सुखं संतुष्टमानसा ॥ ५७ ॥
सूर्योऽपि जनयामास छायायां भगवान् प्रभुः ॥ सावर्णिं मातृसदृशं भविष्यमष्टमं मनुम् ॥ ५८ ॥ शनैश्चरं ततः पुत्रं श्यामलांगं महाद्यु
तिम् ॥ चकार सा तदा छाया स्नेहाधिक्यं स्वपुत्रयोः ॥ ५९ ॥ स्नेहाधिक्याद्यमः क्रुद्धो निजघानांघ्रिणा च ताम् ॥ मातृस्नेहाद्बालभावा
दाधिक्याद्दुःखवैभवात् ॥ ६० ॥ क्रुद्धा छायापि तं सौरिं शशाप भृशदुःखिता ॥ यस्मात्त्वया जनन्यास्तु गात्रे न्यस्तः पदः स्वयम् ॥
भूमौ निपतताद्दुष्ट चरणस्ते यथाधमः ॥६१ ॥ इति श्रुत्वा वचस्तस्याः सहसा पितुरंतिके ॥ सर्वं निवेदयामास तस्याः शापादिकं तथा ॥
॥ ६२ ॥ यथाहं हि तथा सर्वे किमर्थं स्नेहवैभवम् ॥ तयाशापोपि दत्तो मे शृण्विदानीमनागसः ॥ ६३ ॥ किं न कुर्वंति मातुर्वै वात्सल्यात्पु
त्रकाः प्रभो ॥ न नूनं जननी चैवमस्माकं भगवन् विभो ॥ अन्येयं काचिदागत्य स्थिता वै तव वेश्मनि ॥ ६४ ॥ ईश्वर उवाच ॥ इति
श्रुत्वा वचस्तस्या भास्करो रुष्टमानसः ॥ दध्यौ क्षणं महादेवि ज्ञातवान् सपदि प्रभः ॥ ६५ ॥ आगत्य सहसा तत्र यत्र छाया समा
स्थिता ॥ उवाच परमक्रुद्धश्चक्षुषा निर्दहन्निव ॥ ६६ ॥ विवस्वानुवाच ॥ वद शीघ्रं स्वकं रूपं का वा त्वं चंडिकात्र वै ॥ किमर्थं शापितः
पुत्रो यमः प्राणाधिको मम ॥ ६७ ॥ भस्मीकरोमि सहसा नोचेत्त्वं कथयाशु वै ॥ इति श्रुत्वा वचस्तस्य वेपंती सहसा विभुम् ॥ ६८ ॥
उवाच परमत्रस्ता छाया तस्य महात्मनः ॥ सवर्णाहं तु संज्ञायाः सा गता पितुरंतिके. ॥ ६९ ॥ इति वै गदितं श्रुत्वा छायाया निश्चितं
वचः ॥ उवाच स्वसुतं देवो यमं शापयुतं तदा ॥ ७० ॥ न शक्यमेतन्मिथ्या तु कर्तुं मातृवचः सुत ॥ मांसमादाय कीटास्ते पादाद्या
स्यंति भूतलम् ॥ ७१ ॥ इति तं शांतयित्वा तु गतस्त्वष्टुर्गृहे तथा ॥ गत्वा तत्राप्रियं वाक्यं बभाषे श्वशुरं प्रिये ॥ ७२ ॥ विवस्वानु
वाच ॥ विश्वकर्मन्किमर्थं वै त्वया वै मम वल्लभा ॥ आनीता कुत्र सा नीता वद शीघ्रं मम प्रियाम् ॥ ७३ ॥ नोचेद्भस्मी करिष्यामि

त्वां च तां च क्षणादहम् ॥ निवेदयस्व शीघ्रं हि मया किं कथितं च ताम् ॥ ७४ ॥ विश्वकर्मोवाच ॥ भगवन्संहर क्रोधं सर्वं संपादयाम्य
हम् ॥ संज्ञा ते तेजसा देवी तापिता सुतरामथ ॥ ७५ ॥ तस्मात्ते तेजसो ह्रासं करिष्यामि प्रभो स्वयम् ॥ तदा ह्यन्वेषयिष्यामि सुतां
स्वीयां प्रियां तव ॥ ७६ ॥ इत्युक्त्वा वचनं तं वै भ्रमि मारोप्य पार्वति ॥ तेजः संशातयामास तेजोह्रासं चकार ह ॥ ७७॥ तेन वै तेजसा
त्वष्टा चकार विष्णुचक्रकम् ॥ ऐंद्रं वज्रं कुमारस्य शक्तिं क्रौंचवधाय च ॥ ७८ ॥ एकस्यादित्यवपुषश्चक्रे द्वादशसूर्यकान् ॥ सर्वेषां देव
वर्य्याणां शस्त्रान्यस्त्राणि पार्वति ॥ ७९ ॥ अथोवाच रविं त्वष्टा प्रहस्य सह्यतेजसम् ॥ चिरं ध्यात्वा तु तां बुद्ध्वा त्रैलोक्यतिमिरापहम् ॥
॥ ८० ॥ वडवारूप मास्थाय कुरुषु वर्त्तते हि सा ॥ तत्र गच्छ महाबाहो समानय स्ववल्लभाम् ॥ ८१ ॥ इति तस्य वचः श्रुत्वा गतस्तत्र
महाप्रभुः ॥ ध्यायंतीं तां परं ज्योतिर्वडवारूपमास्थिताम् ॥ ८२ ॥ ददर्श भगवान् सूर्यस्तदवस्थागतां प्रियाम् ॥ स्वयं च भगवान् सूर्यो
हयरूपधरस्तदा ॥ ८३ ॥ तं दृष्ट्वा सहसा संज्ञा परपुंसो विशंकया ॥ मुखं संभावयामास तत्र वीर्य्यमवासृजत् ॥ ८४ ॥ सा तन्निरवमच्छुक्रं
नासारंध्रेण वै रवेः ॥ अश्विनौ भिषजौ देवौ जातौ तस्य महात्मनः ॥ ८५ ॥ नासत्यश्चैव दस्रश्च रूपेणाप्रतिमौ च तौ ॥ सा तु दृष्ट्वा स्व
भर्त्तारं तुतोष वरवर्णिनी ॥ ८६ ॥ तामानयित्वा भगवान् संज्ञां चैव महौजसा ॥ रेमे तया सुखं सूर्यस्तथा सा सुखिताभवत् ॥ ८७ ॥
यमश्च कर्मणा तेन पापिनां शासने रतः ॥ धर्मेण रंजयामास धर्मराडितिविश्रुतः ॥ ८८ ॥ संतुष्टो भास्करः प्रादात्पितॄणां स्वामितां च
वै ॥ यमुनाच महाभागे त्रैलाक्यहितकांक्षया ॥ ८९ ॥ नदी जाता महाभागा यमुनोत्तरवासिनी ॥ यस्यां वै दर्शनात्सद्यः सर्वपापैः
प्रमुच्यते ॥ ९० ॥ पूर्वं जातो महातेजाः सुतो वैवस्वतो मनुः ॥ सांप्रतं यो महाभागे वर्त्तते मनुसत्तमः ॥ ९१ ॥ छायाया अपि पुत्रौ
द्वौ शनिः सावर्णिकस्तथा ॥ शनिस्तु ग्रहतां प्राप्तः सर्वजंतुविमर्दनः ॥ ९२ ॥ सावर्णिको महातेजाः पूर्वेण तपसा मनुः ॥ महामायाप्रभा
वेण भविष्यत्यष्टमो मनुः ॥ ९३ ॥ शृणु सप्तर्षयो ये वै भविष्यंति महेश्वरि ॥ अश्वत्थामा कृपाचार्यो रामो व्यासस्तथा स्मृतः ॥ ९४ ॥
कौशिको गालवश्चैव रुरुर्वै सप्तमो मुनिः ॥ एते सप्तर्षयो देवि भविष्यत्यंतरे मनोः ॥ ९५ ॥ देवाः प्रत्यक्षधर्माणो बलिरिन्द्रो भवि

ष्यति ॥ तेषामेवान्वया देवि गोत्रप्रावर्त्तकाः पुनः ॥ ९६ ॥ सप्तर्षयस्तु ये ये वै प्रोक्ता मन्वंतरं प्रति ॥ भूयस्तएव मनुषु भविष्यंति सुताः स्वयम् ॥ ९७ ॥ देवाश्चापि तपस्यंतो मनुष्याः पूर्वके मनौ ॥ भविष्यंति महेशानि मया दृष्टाः पुनःपुनः ॥ ९८ ॥ जलयंत्रघटा यद्वद्गच्छंत्यायांति पार्वति ॥ तद्वत्संसारजालं तु वर्त्तते वरवर्णिनि ॥ ९९ ॥ सर्वमेवास्थिरं प्रोक्तं ब्रह्मादिस्तंबसंयुतम् ॥ कश्चित्प्राणीयुगे नष्टः कश्चिद्युगसहस्रके ॥ १०० ॥ परिणामे च सर्वेषां क्षयो भवति पार्वति ॥ अक्षयं तु परं ब्रह्म विश्वरूपं बहिः स्थितम् ॥ १०१ ॥ तदेव परमं ब्रह्म गंगाख्यं भुवि पार्वति ॥ सर्वं मन्ये त्वद्ध्रुवं हि ध्रुवमेकं परात्परम् ॥ १०२ ॥ कृतत्रेतादिकः कालस्तथा मन्वंतरादिकः ॥ तत्सर्वं हि महाभागे गंगारूपी महाप्रभुः ॥ १०३ ॥ इति ते कथिता देवि मनूनां संस्थितिर्मया ॥ सर्वपापहरा नित्या पठतां शृण्वतां तथा ॥ १०४ ॥ इति श्रीस्कांदे केदारखंडे मन्वंतरस्थितिवर्णनं नामनवमोऽध्यायः ॥ ९ ॥ ॥ ईश्वर उवाच ॥ ॥ कृतत्रेतादिकानां च मनूनां ब्रह्मणस्तथा ॥ वर्षाणि कथयिष्यामि शृणु वै गदतो मम ॥ १ ॥ निमेषैः पंचदशभिः काष्ठोक्ता ब्रह्मवादिभिः ॥ त्रिंशत् काष्ठा भवेद्देवि कला तत्रिंशति स्तथा ॥ २ ॥ मुहूर्त्त इति मानेन अहोरात्रं तु त्रिंशता ॥ त्रिंशद्भिश्च अहोरात्रैः पक्षद्वयं सितासितम् ॥ ३ ॥ स एव मासो विज्ञेयो गणनज्ञैः समीरितः ॥ द्वाभ्यामाभ्यामृतुः प्रोक्तोयनं च ऋतुभिस्त्रिभिः ॥ ४ ॥ उत्तरं चैव पूर्वोक्तं दक्षिणं च तथैव च ॥ अयनाभ्यां च द्वाभ्यां च वर्षःस्यान्मानुषः प्रिये ॥ ५ ॥ मानुषेण तु मानेन मासो यः समुदाहृतः ॥ पितॄणां तदहोरात्रं क्रमाच्चैव सितासितम् ॥ ६ ॥ देवानां च तथा रात्रिर्दक्षिणायनमुच्यते ॥ उत्तरायणं च तदहो वर्त्तते मम वल्लभे ॥ ७ ॥ शतत्रयं च षष्टिश्चाहोरात्राणां महेश्वरि ॥ दैवः संवत्सरः प्रोक्तः पुराणैर्ऋषिभिः पुरा ॥ ८ ॥ दिव्यमब्दं दशगुणमहोरात्रं मनोः स्मृतम् ॥ दशपंचअहोरात्रं मानवः पक्ष उच्यते ॥ ९ ॥ पक्षो दशगुणो मासस्तैश्च द्वादशभिर्मया ॥ ऋतुश्चैव तथा ख्यातो मानवो वरवर्णिनि ॥ १० ॥ दिव्येनत्विह मानेन वर्षाणां च सहस्रकैः ॥ चतुर्भिर्हि कृतयुगं संध्या च तावती सती ॥ ११ ॥ संध्यांशश्च तथा ख्यातः सर्वधर्मविशारदैः ॥ त्रिभिर्वर्ष सहस्रैस्तु दिव्यैस्त्रेतायुगं स्मृतम् ॥ १२ ॥ संध्या संध्यांशकौ प्रोक्तौ षट्शतैर्मुनिपुंगवैः ॥ द्वाभ्यां वर्षसहस्राभ्यां द्वापरं युगमुच्यते ॥ १३ ॥

तस्यापि द्विशती संध्या संध्यांशश्च तथा स्मृतः ॥ कलिश्चैक सहस्रं तु संध्याचैकशती मता ॥ १४ ॥ तथा संध्यांशकः प्रोक्तो मानेन मम वल्लभे ॥ वर्षद्वादशसाहस्री युगसंख्या प्रकीर्तिता ॥ दिव्या वै युगसंख्या हि शृणु पार्वति कथ्यते ॥ १५ ॥ कृतं त्रेता द्वापरं च कलिश्चैव महेश्वरि ॥ चतुर्णां च युगानां च युगं वै दिव्यकं स्मृतम् ॥ १६ ॥ तावती च भवेद्रात्रिः कल्पश्चैव मया स्मृतः ॥ यदेतत्परमं ब्रह्म गंगाख्यं दिव्यरूपकम् ॥ १७ ॥ तस्मिन्नेव महातोये निमज्जति जगत्रयम् ॥ तत्र शेते महादेवि ब्रह्माख्यो विष्णुरूपकः ॥ १८ ॥ पुनर्युगसहस्रे तु समतीते महेश्वरि ॥ पुनस्तथैव कुरुते ब्रह्मा सर्गादिकीं क्रियाम् ॥ १९ ॥ एतत्कल्पशतैश्चैव त्रिभिः षड्भिश्च पार्वति ॥ ब्राह्मो वर्षस्तथा ख्यातस्तैश्चवर्षशतं तथा ॥ २० ॥ आयुर्वै कथितं ब्राह्मं द्विपरार्द्धं तथा स्मृतम् ॥ पुनर्द्वितीयकल्पे तु हनूमांश्च भविष्यति ॥ २१ ॥ जाता अनंता ब्रह्माणो भविष्यंति महेश्वरि ॥ युगांतकाले भगवान्रुद्ररूपी जनार्दनः ॥ २२ ॥ क्षयं नयति सर्वं हि ब्रह्मांडांतरगोचरम् ॥ स्थावरं च चरं चैव सर्व्वंन्नयति भस्मसात् ॥ २३ ॥ कथितं ते मया देवि कालस्य परिमाणकम् ॥ गंगाख्यं परमं ब्रह्म शृण्वतां पठतां शुभम् ॥ २४ ॥ इति श्रीस्कांदे केदारखंडे कालसंख्यानाम दशमोऽध्यायः ॥ १० ॥ ॥ पार्वत्युवाच ॥ ॥ इक्ष्वाकुप्रमुखा ये वै वैवस्वतमनोः सुताः ॥ तेषां विस्तरतो ब्रह्मन् वंशं ब्रूहि मम प्रभो ॥ १ ॥ चंद्रवंशे कथं जाताः के वै श्रेष्ठतरा नृपाः ॥ तेषां च चरितं सर्वं कथय त्वं मम प्रिय ॥ २ ॥ ईश्वर उवाच ॥ शृणु देवि प्रवक्ष्यामि ये जातास्मिन्कुलार्णवे ॥ महानुभावचरितवृत्तान्तं प्राणवल्लभे ॥ ३ ॥ येषां वै कीर्त्तनात्सद्यः सर्वपापैः प्रमुच्यते ॥ तंशृणुष्व महावंशं सूर्यसोमात्मकं प्रिये ॥ ४ ॥ अतीता वर्त्तमानाश्च भविष्या ये महानृपाः ॥ तान्वक्ष्यामि तवाग्रे तु भक्तिस्ते परमा यतः ॥ ५ ॥ परात्मा निर्गुणः शांतश्चक्षुरादिविवर्जितः ॥ प्रकृत्यात्मा समायुक्तस्तस्माज्जातः प्रजापतिः ॥ ६ ॥ ब्रह्मणो दक्षिणांगुष्ठाद्दक्षो नाम बभूव ह ॥ वामांगुष्ठात्तथा नारी दक्षस्याभूत्परिग्रहः ॥ ७ ॥ दक्षकन्याश्च पूर्वोक्तास्तासां या अदितिस्तु सा ॥ सूर्यं वै तेजसो राशिं पुत्रं प्रासूत कश्यपात् ॥ ८ ॥ आदित्यश्च महातेजाः संज्ञायां वैवस्वतं मनुम् ॥ जनयामास धर्मज्ञो नृपाद्यं जगदीश्वरि ॥ ९ ॥ वैवस्वतमनुश्चैव इक्ष्वाकुप्रमुखान् सुतान् ॥ कन्यामेकामिलां चैव चंद्रवंशविवर्द्धि

नीम् ॥ १० ॥ प्रत्येकशः शृणु प्राज्ञे मनुपुत्रान् महौजसः ॥ इक्ष्वाकुश्चैव नाभागो नरिष्यान् प्रांशुरेव च ॥ ११ ॥ धृष्टः शर्यातिनाभौ
च करूषश्च तथैव च ॥ पृषध्रश्च नवैते वै मनुपुत्रा महाबलाः ॥ १२ ॥ इलायाः शृणु देवेशि कथ्यमानंमहेश्वरि ॥ इष्टिं चक्रे पुत्रकामी वै
वस्वतमनुः प्रिये ॥ १३ ॥ पूर्वमेव यदा देवि समायातो वसुस्तदा ॥ तस्यामिष्ट्यां प्रवर्त्तत्यां मित्रावरुणयोस्तदा ॥ १४ ॥ अंशेन हूयमा
नायामाहुत्यां सर्वदानवाः ॥ ऊचुः परस्परं सर्वे विस्मयाविष्टमानसाः ॥ १५ ॥ अहोस्य तपसो वीर्य्यमहोश्रुतमहोद्भुतम् ॥ यत्र दिव्यां
बरधरा कन्या परमसुंदरी ॥ १६ ॥ इः काम इति संप्रोक्तस्तंलातीतियतस्त्विला ॥ इत्यूचुः सर्वमुनयो विस्मयाविष्टमानसाः ॥ १७ ॥
आगच्छेले मया सार्धमित्युवाच मनुस्तदा ॥ तमिला प्रत्युवाचेदं मनुं दंडधरं नृपम् ॥ १८ ॥ इलोवाच ॥ जातास्मि मित्रावरुणयोरंशेन
मनुसत्तम ॥ तत्रैवाहं गमिष्यामि नोचेद्धर्मक्षतिर्भवेत् ॥ १९ ॥ ईश्वर उवाच ॥ इत्युक्त्वा तु मनुं सा तु सत्यधर्मपरायणा ॥ ययौ समीपं
हि तयोर्मित्रावरुणयोस्तदा ॥ २० ॥ तत्र गत्वा महेशानि ववंदे चरणौ तयोः ॥ उवाच भक्तिसंपन्ना विनयाविष्टमानसा ॥ २१ ॥
इलोवाच ॥ जातास्मि भवतामंशादिलानाम्नी तु विश्रुता ॥ मनोरिष्ट्यां समुत्पन्ना त्वत्समीपमुपागता ॥ २२ ॥ उवाचात्मसुतां मां हि
अनुगच्छस्व त्वं मनुः ॥ मयोक्तं मित्रावरुणौ गच्छामि पितरौ मम ॥ युवामाज्ञापयेतां मां किं करोमि हि सांप्रतम् ॥ २३ ॥ मित्रावरु
णावूचतुः ॥ धन्यासि त्वं महाभागे यस्यास्तु भक्तिरीदृशी ॥ तुष्टौ स्वस्ते महाभागे प्रश्रयेण दमेन च ॥ २४ ॥ आवयोस्त्वं महाभागे
कन्या ख्यातिं गमिष्यसि ॥ इदानीं गच्छ तत्रैवोभयवंशविवर्द्धिनी ॥ २५ ॥ मनोर्वंशकरस्त्वं हि सुद्युम्न इति विश्रुतः ॥ यशसा तपसा
युक्तो रूपेणाप्रतिमो भुवि ॥ २६ ॥ ईश्वर उवाच ॥ तयोरितिवचः श्रुत्वा हर्षसंपूर्णमानसा ॥ समाययौ बुधस्याथ आश्रमे मुनिपूजिते ॥
॥ २७ ॥ त्रैलोक्यसुंदरीं तां तु दृष्ट्वा चांद्रिः प्रतापवान् ॥ कामस्य शरभिन्नांगो मदविह्वललोचनः ॥ २८ ॥ उवाच वचनं तां तु गच्छ
मानामिलां बुधः ॥ क्व गच्छसि महाभागे हृत्वा मे मानसीं स्थितिम् ॥ २९ ॥ का वा त्वं शुभसर्वांगी देवी वा मानुषी हि वा ॥ न वै

त्वत्सदृशी लोके दृष्टा नास्ति त्रिलोकके ॥ ३० ॥ शाधि मां सोमपुत्रं हि बुधेतिपरिकीर्त्तितम् ॥ इति तस्य वचः श्रुत्वा तमिला प्रत्यभा

पत ॥२१॥ इलोवाच ॥ अहं मनुसुता ब्रह्मन् मित्रावरुणयोस्तथा ॥ जातास्म्यंशेन भगवन्निला नाम्नीति विश्रुता ॥२२॥ ईश्वर उवाच ॥
बुध इत्युक्तवंतीं तां संगृह्य बाहुना तदा ॥ आश्लिष्य सहसा देवि मैथुनायोपचक्रमे ॥ २३ ॥ तस्यां च जनयामास पुत्रं परमसुंदरम् ॥
नाम्ना पुरूरवा जज्ञे इलापुत्रो महायशाः ॥ २४ ॥ जनयित्वा तु तं पुत्रमिला सुद्युम्नतां गता ॥ सुद्युम्नोपि महादेवि सूर्यवंशविवर्द्धनः ॥
॥ २५ ॥ सुद्युम्नस्य त्रयः पुत्रा बभूवुरमितौजसः ॥ उत्कलश्च गयश्चैव विनीताश्वश्च पार्वति ॥ २६ ॥ दिक्पूर्वा उत्कलस्याभूत् गयस्यतु
गयापुरी ॥ दक्षिणासुमहाभागे विनीताश्वस्य पार्वति ॥ २७ ॥ मनुश्चापि महातेजाः प्रविष्टो हि दिवाकरम् ॥ दिवाकरं प्रविष्टे तु दशधा
भाजिता धरा ॥ २८ ॥ इति ते कथिता देवि इलोत्पत्तिर्मया शुभे ॥ धन्यं यशस्यमायुष्यं श्रुत्वा पापैः प्रमुच्यते ॥ २९ ॥ इति श्री
स्कांदे केदारखंडे चंद्रवंशानुकीर्त्तने इलोत्पत्तिर्नामैकादशोऽध्यायः ॥ ११ ॥ ॥ ईश्वर उवाच ॥ ॥ तत्क्षेत्रं दशधा कृत्वा पुत्रा इक्ष्वा
कुज्येष्ठकाः ॥ यूपांकितां हि सकलां चक्रुर्भूमिं सपर्वताम् ॥ १ ॥ इक्ष्वाकुर्ज्येष्ठपुत्रस्तु मध्यदेशमवाप्तवान् ॥ कन्याभावात्तु सुद्युम्नो समभागं
न चाप्तवान् ॥ २ ॥ वसिष्ठवचनेनासौ सुद्युम्नः पुरसत्तमम् ॥ प्रतिष्ठानं चकारासौ नानापणविराजितम् ॥ ३ ॥ तं पुरूरवसे प्रादाच्चकार
नृपसत्क्रियाम् ॥ भुक्त्वा राज्यसुखं राजा स्वयं च तपसे ययौ ॥ ४ ॥ यत्र गंगा महाभागे हिमवद्दक्षिणे स्थले ॥ गंगोत्तरमिति ख्यातं त्रिषु
लोकेषु विश्रुतम् ॥ ५ ॥ तस्माच्च दक्षिणे भागे नानामुनिगणान्विते ॥ गुरोस्तव महादेवि दक्षिणे पार्श्वके गिरेः ॥ ६ ॥ अलकनंदोत्तरे
तीरे क्षेत्रे श्रीसंज्ञके नृपः ॥ तपश्चकार परमं तोषयन् मनसा हि माम् ॥ ७ ॥ दश वर्षसहस्राणि निराहारो जितेंद्रियः ॥ अहं च परमं तुष्टो
गतस्तत्र यदृच्छया ॥ ८ ॥ दृष्ट्वा तं तप्यमानं हि सुद्युम्नं मनुपुत्रकम् ॥ उक्तवांस्तं तु संबोध्य सुद्युम्नेति पुनः पुनः ॥ ९ ॥ मयोक्तं वचनं
श्रुत्वा सुद्युम्नस्तपतां वरः ॥ प्रांजलिः प्रयतो भूत्वा उत्थायोवाच मां शिवे ॥ १० ॥ सुद्युम्न उवाच ॥ नमो नमस्ते शतशोनमस्ते परा
त्परं धाम महानुभाव ॥ शिवाधिप प्राणविभो महेश प्रसाधि मां कामसुखप्रसक्तम् ॥ ११ ॥ आदौ त्वमाजौ सुपरेशगम्य गम्याधिनाथेश ॥ ११ ॥
चराचरेश ॥ मध्ये त्वमेवासि सुरासुराणामन्ते त्वमन्तोखिलदेहिनां च ॥ १२ ॥ न वेद कश्चिद्भवतः पुरारे मुरारिरूपेण समास्थितोसि ॥

परा ॥ २९ ॥ किं कर्त्तव्यं मयेदानीं क्व गच्छामि करोमि किम् ॥ कथं मे मरणं नाथ भविष्यति वद प्रभो ॥ ३० ॥ ममाभाग्यान्मया प्राप्तं दुःखमेतन्मुनीश्वर ॥ हा हतोस्मि न गच्छामि तां विना स्वगृहं मुने ॥ ३१ ॥ ईश्वर उवाच ॥ निशम्येदं वचो राज्ञो जह्नुर्वै मुनिपुंगवः ॥ कृपाविष्टमना देवि प्रोवाच वचनं नृपम् ॥ ३२ ॥ जह्नुरुवाच ॥ शृणु राजन् समाधौ मे विघ्नं वै अनया कृतम् ॥ उपचारादिकं सर्वं तस्मान्मेवहितं नृप ॥ ३३ ॥ धन्योसि नृपशार्दूल यस्य ते मतिरीदृशी ॥ पितृभक्तिरतो दांतो दैवतानां च पूजकः ॥ ३४ ॥ प्रसन्नोस्मि दमेन त्वत्प्रश्रयेण नयेन च ॥ पुनरेतादृशं कर्म न विधेयं क्वचित्त्वया ॥३५॥ अप्रमत्तेन गंतव्यं गंगामानीय सत्वरम् ॥ अतः परं महाराज मन्नाम्नीयं भविष्यति ॥३६॥ जाह्नवीतिसमाख्याता कन्यामे पापनाशिनी ॥ कीर्तिस्तवादि राजेन्द्रमहती संभविष्यति ॥३७॥ मुंचामि जानुना देवीं विनयेन तवाधुना ॥ यस्या दर्शनमात्रेण सर्वपापं विनश्यति ॥३८॥ ईश्वर उवाच ॥ इत्युक्त्वा मुनि शार्दूलो जानुदेशात्पुनर्ददौ ॥ गंगाप्रवाहं पापघ्नं कन्येति कथितं पुनः ॥ ३९ ॥ सोपि राजा महाबाहुः परिक्रम्य प्रणम्य च ॥ तां प्राप्य संययावग्रे चक्रैकेन रथेन हि ॥ ४० ॥ इति श्रीस्कांदे केदारखंडे भगीरथोपाख्याने गंगानयने जह्नूपाख्यानं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ ईश्वर उवाच ॥ ॥ पुनाराजा महाबाहुर्नन्दनाद्रिसमीपगे ॥ वासुकिप्रमुखान्नागांस्तपस्तप्तुं समास्थितान् ॥ १ ॥ तमेवार्थं चिंतमानान् शिवसंन्यस्तमानसान् ॥ कीर्त्तयानान् हि गंगेति गंगागंगेति वा पुनः ॥ २ ॥ तस्मिन्नेव स्थले रम्ये ददर्श मुक्तिलालसान् ॥ दृष्ट्वा तान्विस्मयाविष्टो गंगां स्तोतुं मनोदधे ॥ ३ ॥ चिंतयामास बहुधा किं कर्त्तव्यमतः परम् ॥ पाताले नागनिलये नयिष्यंति सरिद्वराम् ॥ ॥ ४ ॥ किं कर्त्तव्यं क्व गच्छामि को मे दुःखं निवारयेत् ॥ इति वै चिंतयानोसौ तुष्टाव च सरिद्वराम् ॥ ५ ॥ नाम्नां सहस्रमाख्यातं गंगायास्तत्र पार्वति ॥ दिव्यरूपधरा देवी प्रत्यक्षं प्राह तं नृपम् ॥ ६ ॥ पार्वत्युवाच ॥ देवदेव महादेव भक्तानां प्रीतिवर्द्धन ॥ कानि नामानि प्रोक्तानि तेन राज्ञा महात्मना ॥ ७ ॥ सहस्रनाम गंगायाः स्तोत्रं परमदुर्लभम् ॥ वद मे देवशार्दूल भक्तास्मि सततं प्रिया ॥ ८ ॥ ईश्वर उवाच ॥ साधु साधु महादेवि पृष्टं नामामृतं त्वया ॥ गुह्याद्गुह्यतरं स्तोत्रं प्रवक्ष्यामि समासतः ॥ ९ ॥ यस्य स्मरणमात्रेण नरो

वै शिवतां व्रजेत् ॥ पठनाल्लिखनाच्चैव पूजनात् किं न जायते ॥ १० ॥ श्लोकमेकं पठित्वापि गंगायाः शतयोजने ॥ गंगास्नानफलं
सद्यः प्राप्नुयान्नात्र संशयः ॥ ११ ॥ सहस्रनामस्तोत्रस्य भगीरथ ऋषिर्मतः ॥ छंदोनुष्टुप् तथाख्यातं गंगा वै देवता मता ॥ १२ ॥ सर्वतः
पापनाशार्थं सर्वकामार्थसिद्धये ॥ अक्षयस्वर्गकामाय विनियोगः प्रकीर्त्तितः ॥ १३ ॥ गंगा सरिद्वरा विष्णुपादाम्बुजजनिः परा ॥
शिवशेखरसंवासा ब्रह्मणः कलशस्थिता ॥ १४ ॥ आकाशगामिनी भद्रा चतुरात्मा प्रवाहिनी ॥ ब्रह्मरंध्रसमुद्भूता ब्रह्मरंध्रनिवासिनी ॥
॥ १५ ॥ ब्रह्मरंध्रधरा धेनुः सर्वकामार्थदायिनी ॥ ब्रह्मांडोद्भेदनपरा परब्रह्मधरा परा ॥ १६ ॥ द्रवरूपधरा चैव शिवसंगमदायिनी ॥
मुक्तिदा भुक्तिदानंगा शत्रुदावानलात्मिका ॥ १७ ॥ अनंगांगी त्रिमूर्त्तिश्च ब्रह्माणी कमला स्थिता ॥ सरस्वती च सावित्री जयसेना जया-
त्मिका ॥ १८ ॥ जयभद्रा वैष्णवी च चिच्छक्तिः परमेश्वरी ॥ त्रयी वेदवदान्या च मेदिनी मेदिनीधरा ॥ १९ ॥ वेदमूर्त्तिस्त्रिमूर्त्तिश्च
देवमूर्त्तिर्दयापरा ॥ दामिनी दामिनीवासा कुलिशा कुलिशप्रिया ॥ २० ॥ कुलिशांगी कुलांगी च कुलनाथकुटुम्बिनी ॥ कुलीना
सुभगा भाग्या भाग्यगम्या यशोमती ॥ २१ ॥ कला कलाधरधरा कलाधरशतप्रिया ॥ षोडशी षोडशाराध्या षोढान्याससहायिनी ॥
॥ २२ ॥ षोढा समासनिलया षोढांगी कालरूपिणी ॥ कालिका मुंडमाला च कालानां शतनाशिनी ॥ २३ ॥ कालांगी कालनिलया
काली कालेश्वरी वशा ॥ शैवी माया शिवा रुंडा चंडमुंडविनाशिनी ॥ २४ ॥ चंडाट्टहासा दुर्गम्या चंडानां प्रीतिवर्द्धिनी ॥ चंडेश्वरी
महाप्राज्ञा प्रज्ञा धीः सिद्धिदायिनी ॥ २५ ॥ लक्षलाभस्य जननी शतलाभा सुरेश्वरी ॥ कौमारी शक्तिरुद्दिष्टा क्रौंचदैत्यविनाशिनी ॥
॥ २६ ॥ तारकासुरहंत्री च तारकामयगामिनी ॥ तारकस्य परा शक्तिस्तारकाणां पतिप्रिया ॥ २७ ॥ तारकेशपरा ज्योत्स्ना तारेश
शतरूपिणी ॥ नारायणी दयासिंधुः सिंधूत्तरनिवासिनी ॥ २८ ॥ सिंधुश्रेष्ठतमा भार्य्या रत्नदा रत्नहारिणी ॥ जलंधरस्य जननी
जलंधरविरूपिणी ॥ २९ ॥ काममाता च कामघ्नी रतिरूपा शतप्रिया ॥ भीष्ममाता महाभीष्मा भीष्माणां प्रीतिवर्द्धिनी ॥ ३० ॥
ज्वाला कराली तुंगेशी तुंगशेखरवासिनी ॥ तुंगेश्वरसहाया च बदर्याश्रमवासिनी ॥ ३१ ॥ श्रीक्षेत्रनिलया चैव द्वारस्था द्वारपालिनी ॥

जाह्नवी जह्नुतनया नागालयनिवासिनी ॥३२॥ नागानां जननी चैव नागप्रीतिविवर्द्धिनी ॥ नागेश्वरसहाया च कैलासनिलया तथा ॥
॥ ३३ ॥ महाप्रभा वरेण्या च वेदमाता विलासिनी ॥ हरसंगरता चैव हरिपादविनिःसृता ॥ ३४ ॥ अदितिश्च दितिश्चैव कद्रू च विनता
तथा ॥ सुरसा चाग्निगर्भा च रत्नगर्भा विभावरी ॥ ३५ ॥ शारदी वै चंद्रकला नलकूबरसेविता ॥ अरिष्टनेमिदुहिता नहुषांगणवासिनी ॥
॥ ३६ ॥ शंतनोर्गृहिणी भव्या वसुमाता कृशोदरी ॥ मत्स्योदरी सुराराध्या सुराणां प्रीतिदायिनी ॥ ३७ ॥ यमुना चंद्रभागा च श
तद्रूः शरयूस्तथा ॥ सरस्वती शुभामोदा नंदनाद्रिनिवासिनी ॥ ३८ ॥ नंदप्रयागनिलया देवतीर्थनिवासिनी ॥ रुद्राणी रुद्रसावित्री महा
भैरवनादिनी ॥ ३९ ॥ भैरवी भीषणवरा भृगुतुंगनिवासिनी ॥ केदारशिखरावासा महावलयवासिनी ॥ ४० ॥ तुंगभद्रा सुषेणा च मां
धातृजयदायिनी ॥ भूतभव्यपरा सर्वा खर्वगर्वा नृपेश्वरी ॥ ४१ ॥ भविष्यज्ञानदा भूतज्ञानदा वर्त्तमानदा ॥ शुकस्य जननी सौम्या
व्यासमाता सुरेश्वरि ॥ ४२ ॥ धारापातधरा धीरा धैर्य्यदा शुभदायिनी ॥ कंकणा कंकणप्रख्या शुभकंकण दायिनी ॥ ४३ ॥ कंकणैः
पातकहरा प्रबला शत्रुनाशिनी ॥ स्मरतां मुक्तिदा भुक्तिरूपा रूपविवर्जिता ॥ ४४ ॥ देवानीका देवसेव्या सेवारूपफलामला ॥ कृत्तिका
कार्तिकावासा कार्त्तिकस्नानदायिनी ॥ ४५ ॥ पुष्करा पुष्करावासा पुष्पप्रचयसुंदरी ॥ मुनिसेव्या मुनिमैना मानवाकारधारिणी ॥४६॥
मैनाक शिखरावासा काशीपुरनिवासिनी ॥ महाप्रयागनिलया तीर्थराजप्रसाधिनी ॥ ४७ ॥ अक्षया क्षयरूपा च संसारक्षयकारिणी ॥
मृगशीर्षधरा मार्गशीर्षस्नानफलप्रदा ॥ ४८ ॥ पुष्यनक्षत्ररूपा च पौषेतीव फलप्रदा ॥ माघी मघायुता माघ्या माघस्नाननिवासिनी ॥
॥ ४९ ॥ श्रीपंचमी श्रियो रूपा पष्टिचारण्यसंज्ञिता ॥ अचला निश्चला जंबूर्जंबूद्वीपसहायिनी ॥ ५० ॥ भीष्माष्टमी भीष्मगर्भा भीष्म
पंचकसेविता ॥ एकादशी द्वादशी च पुण्यापुण्यसहायिनी ॥ ५१ ॥ पुण्यदा पुण्यनिलया पुण्यांगी चारुवाहिनी ॥ फाल्गुनी फाल्गुने से
व्या होलिका गंधरूपिणी ॥ ५२ ॥ हुताशनी महादेवी संतुष्टा भस्मधारिणी ॥ वसंतर्त्तुसुसेव्या च वसंतोत्सवदायिनी ॥ ५३ ॥ चैत्री
चित्रा प्रिया पुष्पगणरूपा गणेश्वरी ॥ मकरंद स्वरूपा च मकरंदनिवासिनी ॥ ५४ ॥ चैत्रशुक्लप्रतिपदा वर्षारंभकरा शुभा ॥ माधवी मा

धवागारा माधवप्रीतिदायिनी ॥ ५५ ॥ विशाखा वेणुपापघ्ना वैशाखी भानुसप्तमी ॥ वैशाखस्नानशुभदा पिंडाकरनिवासिनी ॥ ५६ ॥ तथाक्षयतृतीया च सकृद्दानशुभप्रदा ॥ प्रपा पुण्यप्रदा चैव नित्यस्नानवशीकृता ॥ ५७ ॥ ज्येष्ठा ज्येष्ठस्य महती दशपापप्रणाशिनी ॥ निर्जला रूपिणी चैव तथानंतशया मता ॥ ५८ ॥ आषाढी चारुसर्वांगी तथा हरिशयस्थिता ॥ श्रावणी श्रवणानंदा सर्वसौख्यप्रदायिनी ॥ ५९ ॥ भद्रा भाद्रपदे सेव्या जन्मा जन्माष्टमी तथा ॥ दूर्वापूजनसंतुष्टा बीजांकुरनिवासिनी ॥ ६० ॥ आश्विने सुतरां सेव्या पितृभक्ति प्रदायिनी ॥ नवमी कृष्णपक्षस्य शुक्लपक्षस्य पूर्णिमा ॥ ६१ ॥ नवरात्रसहाया च कालरात्रिर्महाष्टमी ॥ अश्विनी भौमवारस्य शतरूपा ह्ययोनिजा ॥ ६२ ॥ हरसेव्या हरांगी च हरिमंदिरगामिनी ॥ प्रमोदा मोदसंकल्पा नानारूपा महोदरी ॥ ६३ ॥ महानंदप्रदात्री च नानालंकारधारिणी ॥ अलंकारप्रिया चैव नानातिथिसमाश्रया ॥ ६४ ॥ तिमिंगिलधरा स्वच्छा नानाग्रावविदारिणी ॥ गंडशैलवहा चैव कामदेवधरांबरा ॥ ६५ ॥ सर्वतीर्थमयी सर्वदेवदानवरूपिणी ॥ काशीप्रांतवहा तुच्छप्रवाहा भारनाशिनी ॥ ६६ ॥ भरणी भारणांगी च तथ्यातथ्यप्रिया सती ॥ सतीनां प्रथमं गण्या गण्या सर्वमयी प्रभुः ॥ ६७ ॥ धीर्द्धारणावती सर्वजनस्य हृदि संस्थिता ॥ स्थितिरूपा स्थितिधरा स्थिरांगी कमलप्रिया ॥ ६८ ॥ कुशाच्छन्नतटा चैव दूर्वांकुरविराजिता ॥ तरंगिणी शैवलिनी तरंगशतसंकुला ॥ ॥ ६९ ॥ महाकच्छपनिलया कच्छपपृष्ठसंस्थिता ॥ नानाजंतुधरा प्रोक्ता नानाजंतुविनाशिनी ॥ ७० ॥ वर्षाकालतरा सौम्या वातकल्लोलकारिणी ॥ तीरस्थशवसंछन्ना धन्यानां शववाहिनी ॥ ७१ ॥ तरंगशतशोभाढ्या तरंगशतमालिनी ॥ स्वर्नारीकुचकुंभस्थकुंकुमारुणसुंदरी ॥ ७२ ॥ नानापुष्पोपहारा च सुखसंपत्तिदायिनी ॥ मंदाकिनी सरिच्छ्रेष्ठा सर्वदेवविगाहिनी ॥ ७३ ॥ सर्वलोकमयी तंद्रा तंत्रशास्त्रविनोदिनी ॥ तंत्री तंत्रस्थिता विद्या महादेवकुटुंबिनी ॥ ७४ ॥ सर्वशास्त्रमयी नंदा वासवेश्वरपालिनी ॥ शची पुलोमजा तुंगा कश्यपस्य प्रिया मता ॥ ७५ ॥ सृष्टिः सृष्टिकृदाराध्या प्रलये कालरूपिणी ॥ द्वादशादित्यसदृशी प्रभा त्रैलोक्यदीपिका ॥ ७६ ॥ त्रिलोकनिलया वेद्या वेदरूपावमर्दिनी ॥ मणिप्रचयसंपूज्या मध्याह्नार्कनिवासिनी ॥ ७७ ॥ प्रभातारुणसर्वांगी सर्वकामप्रदायिनी ॥

प्रातःसंध्या तथा प्रोक्ता संध्या मध्याह्निकी मता ॥ ७८ ॥ सायंसंध्या तथा रात्रिसंध्या तिमिररूपिणी ॥ निशीथतारका प्रख्या विद्यु द्रूपा महोत्सवा ॥ ७९ ॥ दुःखानां च निहंत्री च नानादुःखनिवारिणी ॥ विनोदिनी सुकल्लोला सागरस्वननिःस्वना ॥ ८० ॥ गंभीरा वर्त्तशोभाढ्या गंभीरगजगामिनी ॥ नानापद्मसमाकीर्णा जलकुक्कुटशोभिता ॥ ८१ ॥ जलजारुणसर्वांगी शंखवत्कैरवांबरा ॥ कुंदश्वेता कुंदभूषा श्वेतांबरविराजिता ॥ ८२ ॥ राजहंसपरीवारा तटस्थद्रुमशोभिता ॥ द्रुमांबरा द्रुमावासा वृद्धद्रुमविदारिणी ॥ ८३ ॥ पद्मलेखा पद्मसेव्या पद्मा पद्मजपूजिता ॥ लक्ष्मीः श्यामा वरारोहा वरांगी भुवनेश्वरी ॥ ८४ ॥ तारा श्रीदानदा धन्या दानवानां विनाशिनी ॥ छिन्नमस्ता च नाक्षत्रा योगिनी योगसेविता ॥ ८५ ॥ योगगम्या योगिधरा योगिप्रीतिविवर्द्धिनी ॥ योगमार्गरता साध्या साधकाभीष्टदा यिनी ॥ ८६ ॥ सिद्धिदा सिद्धसंसेव्या सिद्धपूज्या सुरेश्वरी ॥ साधिका साधना तुष्टा साधकानां प्रियंकरी ॥ ८७ ॥ प्रद्युम्नस्यैव जननी प्रद्युम्नशतसुंदरी ॥ प्रद्युम्नांगी सुप्रद्युम्ना वराभयकरा तथा ॥ ८८ ॥ वरदा वरसेव्या च वरांगी वरवर्णिनी ॥ वनेचरगणाधीशा वनेचरज नप्रिया ॥ ८९ ॥ वनेचरतृषाहंत्री वनेचरमनःप्रिया ॥ सुखदा सुखसेव्या च शुभानां शतसंयुता ॥ ९० ॥ बलभद्रसमाभासा बलभद्रप्रिया तथा ॥ बलराध्या बला वृष्णिबालानां प्रीतिवर्द्धिनी ॥ ९१ ॥ रामा रामप्रिया साध्वी सीतारामसुसेविता ॥ रमणीया सुरम्यांगी तथा श्रीरमणप्रिया ॥ ९२ ॥ रेवती रैवते गम्या तथा रैवत वासिनी ॥ रतिरूपधरा सुभ्रूर्नारदी नारदेरिता ॥ ९३ ॥ मृदंगशतसंवाद्या मृदं गशतपूजिता ॥ पणवा पणवाकारा पणवेरितशब्दिका ॥ ९४ ॥ नानावादित्रकुशला वादित्रशतशोभिता ॥ मिश्रामिश्रप्रियामित्रामित्र संपर्क शोभिता ॥ रससारा रसाकारा शतसारसशोभिता ॥ ९५ ॥ संधिः संधिस्वरूपा च संधिनिर्णयदीपिका ॥ संधिस्वरूपदुर्गम्या स्वरसंधिस्थिता प्रिया ॥ ९६ ॥ शब्दा शब्दस्वरूपा च शब्दशास्त्रप्रमोदिनी ॥ युष्मदस्मत्स्वरूपा च कारका कारकप्रिया ॥ ९७ ॥ शब्दसंधिस्वरूपा च तद्धितप्रत्यया परा ॥ धातुवादरता चैव धातूनां संधिरूपिणी ॥ ९८ ॥ नैयायिकी तर्कविद्या तर्काराध्या सुतर्कि का ॥ चतुः प्रमाण गम्या च द्रव्यरूपा गुणेश्वरी ॥ ९९ ॥ कर्मज्ञा कर्मनिलया सामान्या समपूजिता ॥ समवायस्थिता भावरूपा सर्व

प्रियंकरी ॥ १०० ॥ पंचविंशतितत्त्वज्ञा ममीमांसकरता तथा ॥ मीमांसशास्त्रनिरता तथा मीमांसकप्रिया ॥ १०१ ॥ मीमांसागम्यरूपा च कर्मब्रह्मप्रपादिता ॥ सांख्या सांख्यपरा संख्या सांख्यसूत्रप्रमोदिनी ॥ १०२ ॥ प्रकृतिः पुरुषाकारा भिन्नाभिन्नस्वरूपिणी ॥ स्पर्शिनी स्पर्शरूपा च स्पर्श्या चुंबकलोहवत् ॥ १०३ ॥ पातंजलिधरा गम्या पतंजलिमुनिप्रिया ॥ वेदांतिनी वेदगम्या वेदांतप्रतिपादिनी ॥ ॥ १०४ ॥ वेदांतनिलया वेद्या वेदांतिकजनप्रिया ॥ अद्वैतरूपिणी चैव अद्वैतप्रतिवादिनी ॥ १०५ ॥ अगम्याकाशरूपा च सर्वदेहस्वरूपिणी ॥ वृथासर्वप्रपंचा च संसारशतसंकुला ॥ १०६ ॥ संसृतिर्ग्रामनिरता धर्मनिष्ठा पुरावरा ॥ धर्मिष्ठा धर्मनिरता धर्मशास्त्रप्रबोधिनी ॥ १०७ ॥ यज्ञीया यज्ञविद्या च यज्ञगम्या जनाधिपा ॥ अश्वमेधादियज्ञानां जननी जातकप्रिया ॥ १०८ ॥ इष्टापूर्तिधरापूर्तिः पूर्णाहुतिस्वरूपका ॥ यज्ञभूमिर्यज्ञदेवी यज्ञानां नाशकारिणी ॥ १०९ ॥ यज्ञवाटस्थिता यज्ञा हविर्दात्री प्रभंजिनी ॥ वाय्वाहारा वायुसेव्या शीतवातमनोहरी ॥ ११० ॥ ललना सरलापूर्वा दक्षिणा वारुणी तथा ॥ कौबेरी च तथा शैवी आग्नेयी नैर्ऋती तथा ॥ १११ ॥ मारुती नंदिनी चैव नंदनारण्यवासिनी ॥ पातालनिलया सौम्या बोधी बुद्धकुलोद्भवा ॥ ११२ ॥ राजनीतिर्दंडनीतिस्त्रयीवार्त्तापरायणा ॥ स्वाहा स्वधा वषट्कारा ॐकारसदृशी जरा ॥ ११३ ॥ नारिकेलप्रिया खर्जूप्रिया रोगविनाशिनी ॥ विस्फोटक हरादिव्या सर्वरोगविनाशिनी ॥ ११४ ॥ जगदाधाररूपा च रूपेणाप्रतिमा तथा ॥ भद्रकालस्वरूपा च मधुकैटभनाशिनी ॥ ११५ ॥ योगमाया महामाया निद्रा तंद्रा प्रवासिनी ॥ नित्यानंदस्वरूपा च सुधामात्रा त्रिधात्मिका ॥११६॥ निःप्रपंचा निराधारा खड्गचर्मधरा सरित् ॥ वनौकसारासवना अलका चामरावती ॥ ११७ ॥ भोगा भोगवती चैव यमसंयमनी कृपा ॥ इर्ष्यासूया तथा निंदा तितिक्षा क्षांतिरार्जवम् ॥ ११८ ॥ दुर्गा दुर्गतमा दुर्गावासिनी वासवप्रिया ॥ चंद्रानना चन्द्रवती तथा त्रिपुरसुंदरी ॥ ११९ ॥ त्रिपुरा त्रिपुरेशानी त्रिपुरेशी त्रिनेत्रका ॥ त्रिपुरध्वंसिनी चित्रा नित्यक्लिन्ना भगेश्वरी ॥ १२० ॥ सुभगा सुभगाराध्या भर्गपूजनतत्परा ॥ सुवासिन्यर्चनप्रीता सुवासाः सुमनोहरा ॥ १२१ ॥ सुप्रकाशा सुराराध्या शोभना शुभनाशिनी ॥ रजोगुणविनिर्मुक्ता निर्मुक्ता मुक्तिदायिनी ॥ १२२ ॥ निःप्रकाशा

निराधारा साधारा गुणसंयुता ॥ गंभीरवेदिनी सौरी तपनी तपनप्रिया ॥१२३॥ अंभोजिनी पुरारातिसेव्या तु सुरभिः स्वरा ॥ नादिनी सुनदा नंदी अंबिका त्र्यंबकासुरी ॥ १२४ ॥ त्रिमार्गगा त्रिबलिनी त्रिजिह्वा त्रितयात्मिका ॥ त्रिनंदा त्रिप्रिया चैव अनसूया त्रिमालिनी ॥ १२५ ॥ त्रिपादिका त्रितंत्री च तंत्रशास्त्रप्रमोदिनी ॥ मंत्रज्ञा मंत्रनिलया मंत्रसाधनतत्परा ॥ १२६ ॥ मंत्राणी मंत्रसुभगा मंत्रजाप्यजला विभुः ॥ रक्तदंती रक्ततुंडा रक्तबीजविनाशिनी ॥ १२७ ॥ रक्तांबरधरारक्ता रक्ताक्षी रक्तवर्जिता ॥ रक्ततृप्ता रक्तहरा रक्तस्य वृद्धिदायिनी ॥ १२८ ॥ हरिताभा हरिद्राभा हरिद्रागंधपूजिता ॥ हरिद्रारससंपूज्या हरिद्रांगी हरित्स्थिता ॥ १२९ ॥ पीतांबरधरानंता पीतगंधसुवासिनी ॥ कर्बुरांगी कर्बुरा च कर्बुरांभःप्रपूजिता ॥ १३० ॥ कनकाभा श्यामरूपा कामरूपधरा.धरा ॥ कामरूपस्थिता विद्या कामरूपनिवासिनी ॥ १३१ ॥ पीठगा पीठसंपूज्या पीठस्था पीठवासिनी ॥ स्वर्णपीठासना पीठा सर्वपीठप्रपूजिता ॥ १३२ ॥ राजराजेश्वरी माला राजराजधनाधिपा ॥ कुबेरगृहसंपच्च यक्षगंधर्वसेविता ॥ १३३ ॥ विद्याधरगणाधीशा विद्याधरप्रपूजिता ॥ यक्षविद्या देवविद्या दैत्यविद्या विदेहिका ॥१३४॥ शुक्रमाता शुक्रसेव्या शुक्रहस्तगता तथा ॥ संजीवनामृताविद्या कचगा कचसेविता ॥१३५॥ देवयानी च शर्मिष्ठा शर्मदा शर्म्मभाविनी ॥ सुरा सर्पिस्तथा माध्वी मदविह्वललोचना ॥ १३६ ॥ सर्वभक्ष्या सर्वगम्या सर्वस्वर्गप्रदायिनी ॥ छंदोमाता पिंगलाक्षी सूत्रपिंगलदीपिका ॥ १३७ ॥ वृत्ता वृत्तप्रिया मंदा पापानां शतमर्दिनी ॥ जगती पृथिवी आर्या अनुष्टुप् त्रिष्टुभुष्णिका ॥ १३८ ॥ स्रग्धरा स्रग्धरा चैव माल्या माल्यप्रिया सुधीः ॥ निर्ममा निरहंकारा निर्मोहा मोहवर्जिता ॥ १३९ ॥ मोहनाशकरा कार्य्या सर्वकार्य्यकरी मता ॥ मोहिनी मोहवलया महावलयसुंदरी ॥ १४० ॥ सुमेरुशिखरावासा सुमेरुगृहपूजिता ॥ सुमेरुमालिनी सुंदा सुमुखी सुमुखप्रिया ॥१४१॥ वैनायकी विघ्नहरी दुष्टविघ्नकरीश्वरी ॥ मुक्तांबरा मुक्तकेशी मत्तमातंगगामिनी ॥१४२॥ ज्वालाकरालवदना ज्वलनांगी जलोदरी ॥ जलपूरितसर्वांगी जलेश्वरप्रपूजिता ॥ १४३ ॥ जलेश्वरजनिर्जाया जालपा जालशोभिता ॥ वृंदा वृंदाधिपा वृंदसेविका वृंदवृक्षका ॥ १४४ ॥ त्वचा त्वचाविहीना च पल्वला पल्वले स्थिता ॥ मीना मीनसहाया च मीनध्वज

विमर्दिनी ॥ १४५ ॥ बडिशा बडिशाकारा धीवरा धीवरात्मजा ॥ पारिजातप्रसूनाभा पारिजातप्रपूरिता ॥१४६॥ पारिजाततटापारा कामधेनुर्विहंगमा ॥ भेरुंडा गरुडा गौडी गुडनैवेद्यवासिनी ॥ १४७ ॥ जातमात्रहरा जाता जातगम्या सुजातिका ॥ कालिंदी कालतनया कला षोडशिका तथा ॥ १४८ ॥ दशमी विजया नाम राज्ञां वै जयदायिनी ॥ युद्धश्रीर्विजयानाम युद्धांगणनिवासिनी ॥१४९॥ मांसरक्ताशना चंडी प्रचंडा शिववल्लभा ॥ शिवदा मथुरावंती कांची द्वारावती तथा ॥ १५० ॥ सरित्पतिप्रिया शुद्धा गंगा सागरसंगमा ॥ प्रद्युम्नपूजिता चंचुचंद्रिका चंडसुंदरी ॥ १५१ ॥ चंपा चंपकपुष्पाग्रा चंपकाभा सुचैलिका ॥ चंचत्तरंगा सर्वाद्या सर्वब्राह्मणपूजिता ॥ १५२ ॥ ब्राह्मणी ब्राह्मणाकारा ब्राह्मणैः शुभसंवृता॥ यज्ञोपवीतिनी विप्रा कुमारी बृहदानना ॥ १५३ ॥ बृहस्पतिप्रपूज्या च गुरुर्गीर्गुरुतत्परा ॥ गुरुप्रीतिर्गुरोर्विद्या गुरुपूजनतत्परा ॥ १५४ ॥ गुर्विणी गुरु गम्या च गयासुरविनाशिनी ॥ पंचकोशी पंचहीना पंचमी पंचसुंदरी ॥ १५५ ॥ पंचेषुः पंचनिलया पंचास्या पंचमात्मिका ॥ पंचपांडवमाता च कुंती कुंतधराकरा ॥ १५६ ॥ तथा कुंतलशोभाढ्या प्रमथाप्रमथा तथा ॥ स्वतंत्रकर्त्री कार्य्यघ्नी द्वितीया कर्मसंस्थिता ॥ १५७ ॥ तृतीया करणे गम्या संप्रदाने चतुर्थिका ॥ अपादाने पंचमी च तथा संबंधषष्ठिका ॥ १५८ ॥ सप्तम्यधिकरणाख्या विभक्तिवरदातुरा ॥ प्रतिबंधस्य जननी औषधी वैद्यजीविनी ॥ १५९ ॥ हरीतकी च शुंठी च कणा हंसपदी तथा ॥ हुसेनी हुंकृतिर्हुंवा गौरार्या वृषभात्मिका ॥ १६० ॥ गोस्तनी निम्नगा निंबा नारदादिभिरर्चिता ॥ रेणुका रेणुतनया रजोनाशनतत्परा ॥ १६१ ॥ पापराशिहरा मंत्री तथा नीरजशोभना ॥ जयारिक्ता सुषेणा च केदारपथगामिनी ॥ १६२ ॥ जलयंत्रामरीकंदा कंदमूलफलाशिनी ॥ पितृमाता पितृपूज्या पितॄणां स्वर्गदायिनी ॥ ॥ १६३ ॥ भगीरथकृपा सिंधुर्भवानी भवनाशिनी ॥ सागरस्वर्गदा चैव सर्वसंसारगामिनी ॥ १६४ ॥ ईश्वर उवाच ॥ नाम्नां सहस्रमाख्यातं गंगायाः सर्वकामदम् ॥ यस्तु वै पठते नित्यं मुक्तिभागी भवेन्नरः ॥ १६५ ॥ पुत्रार्थी लभते पुत्रं भगीरथसमं द्रुतम् ॥ विद्यार्थी लभते विद्यां वाचस्पतिसमो भवेत् ॥ १६६ ॥ श्राद्धे शृणोति यो भक्त्या पठते वै समाहितः ॥ दुर्गता अपि पितरो मुक्तिं गच्छंत्यना

मया: ॥ १६७ ॥ तथा दशहरायां हि गंगामध्ये स्थितः पुमान् ॥ पठते प्रत्यहं देवि तस्य मुक्तिर्न संशयः ॥ १६८ ॥ इति श्रीस्कांदे केदारखण्डे भगीरथोपाख्याने गंगावतरणे श्रीगङ्गासहस्रनामस्तोत्रं नाम अष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ ईश्वर उवाच ॥ ॥ इति स्तुता महादेवि गंगा परमपाविनी ॥ राज्ञा भगीरथेनाशु प्रत्यक्षं प्राह जाह्नवी ॥ १ ॥ श्रीगंगोवाच ॥ तुष्टास्मि सततं वत्स तपसा तव भूपते ॥ इदं यद्वै त्वयाख्यातं नाम्नां साहस्रमुत्तमम् ॥ २ ॥ पुरातनं पुरारातिगीतं सर्वोत्तमोत्तमम् ॥ मत्प्रसादात्त्वया ज्ञातं गुह्याद्गुह्यतरं परम् ॥ ३ ॥ गोपनीयं प्रयत्नेन दुर्लभं सार्वभौमकम् ॥ प्रसन्नास्मितरां राजन् स्तोत्राख्यानेन भूपते ॥ ४ ॥ वरं वरय भद्रं ते वरार्हो सि भगीरथ ॥ इदं वै मामकं रूपं न दृष्टं केनचित्पुरा ॥ ५ ॥ अतो धन्योसि सौरेस्मिन्वंशे मुनिजनाश्रये ॥ यस्य वै दर्शनं जाता अहं ब्रह्मकलेवरा ॥ ६ ॥ ईश्वर उवाच ॥ इत्युक्त्वा जाह्नवी देवी दर्शयामास स्वं वपुः ॥ त्रैलोक्यदुर्लभं देहं क्वणत्कांचीगुणान्वितम् ॥ ॥ ७ ॥ कर्णालंबितताटंकं श्वेतच्छत्रोपशोभितम् ॥ इंद्रादिभिर्लोकपालैर्वीज्यमानं सुचामरैः ॥ ८ ॥ अनेकस्त्रीपरिवृतां स्वर्णसिंहासने स्थिताम् ॥ दृष्ट्वा गंगां महादेवीं जगाद वरमुत्तमम् ॥ ९ ॥ भगीरथ उवाच ॥ कृपां विधेहि दासेऽस्मिन्मयि दुःखसमाकुले ॥ न गंतव्यं त्वया देवि पातालनिलये शुभे ॥ १० ॥ विना मुक्तिं प्रेपयित्वा मत्पितॄन्कोपदग्धकान् ॥ त्वया समग्रभावेन स्वयं भारतवर्षके ॥ ११ ॥ श्रीगंगोवाच ॥ भगीरथ महाप्राज्ञ एवमेव भविष्यति ॥ यावच्चन्द्रग्रहेशाद्याः स्थास्यंत्यंबरमण्डले ॥ १२ ॥ तावत्कीर्तिर्महाराज भविता तेनृलोकके ॥ नामापितवचश्रुत्वा सर्वं पापैः प्रमुच्यते ॥ १३ ॥ कलेर्द्वितीयपादे तु गमिष्यामि पुनस्तले ॥ गच्छ राजन्महीपाल साधु साधु न संशयः ॥ १४ ॥ ईश्वर उवाच ॥ एतस्मिन्नंतरे नागास्तद्वरं सहसा प्रिये ॥ ऊचुर्वासुकये सर्वे वरदानादिकं तथा ॥ १५ ॥ स श्रुत्वा नागवचनं प्रमथाधिपपूजिते ॥ सहस्रफणशोभाग्रे गंगाया निकटे ययौ ॥ १६ ॥ निर्दहन्विषज्वालाभिः पर्वतान् सरितोम्बुदान् ॥ वृक्षान् गुल्मलतापुंजान्वनानि सहसा ततः ॥ १७ ॥ अनेकशतसाहस्रसर्पनाग गणैर्वृतः ॥ दृष्ट्वा भगीरथो राजा तादृशोपद्रवं प्रिये ॥ १८ ॥ अस्तौषीत्सहसा शेषं नागानामधिकं तथा ॥ प्रणामाञ्छतशश्चक्रे नारायणपरायणः ॥ १९ ॥ बहुधा संस्तुतो राज्ञा शेषः श्रीविष्णुसं

स्कं. पु. ज्ञकः ॥ प्रसन्नश्च यथावत्तु त्यक्का तं सागरात्मजम् ॥ २० ॥ आजहार तदा गंगां पातालनिलये ययौ ॥ एतस्मिन्समये गंगा प्रोवाच
॥ ४१ ॥ शतशीर्षकम् ॥ २१ ॥ श्रीगंगोवाच ॥ विष्णुर्जिष्णुर्वषट्कारो दितिज़ो दैत्यसूदनः ॥ फणासहस्रविलसद्भूमंडल अहस्करः ॥ २२ ॥ सर्पे के. खं.
राजो विषी वैद्यो भानुर्भानुसहस्रधृक् ॥ रजताद्रिसमाकारोऽनंतोनंतशिराः प्रभुः ॥ २३ ॥ ईश्वर उवाच ॥ षोडशैतानि नामानि सर्प्प अ. ३९
राजस्य यः पठेत् ॥ विषग्रस्तो नागदष्टो मुच्यते सहसा विषात् ॥ २४ ॥ सर्पं दृष्ट्वापि नामानि सर्प्पराजस्य यः पठेत् ॥ विलीयंते
क्षणादेव दर्शनात्तस्य भोगिनः ॥ २५ ॥ इति स्तुतो गंगयासौ शेषः सौभाग्यदायकः ॥ उवाचार्चपथि प्राणे किमर्थं संस्तुतोस्म्यहम् ॥
॥ २६ ॥ इत्युक्ता तेन सा गंगा प्रोवाच विनयालसम् ॥ भगीरथेन सततं कैलासादेव वासुके ॥ २७॥ निमंत्रितास्मि भूमौ हि पितॄणां
मुक्तिकारणात् ॥ सांप्रतं तदवश्यं वै कर्त्तव्यं भगवन्मया ॥ २८ ॥ चरमेस्मिन् युगे भूय आगमिष्यामि ते स्थले ॥ इदानीं मुंच मे शीघ्रं
समुद्रे मे मतिर्गतिः ॥ २९ ॥ ॐमित्युक्का सर्प्पराजस्त्यक्का तद्ब्रह्मणो वपुः ॥ प्रणम्य च परिक्रम्य ययौ स निलये स्वके ॥ ३० ॥
अद्यापि तत्प्रदेशेहि विषज्वालाः सहस्रशः ॥ जायंते सर्पराजस्य दह्यंतेनेकदेहिनः ॥ ३१ ॥ चतुर्योजनविस्तीर्णे स्थाने तस्मिन् महे
श्वरि ॥ न संति देवगंधर्वा न मृगादिकजंतवः ॥ ३२ ॥ सरोवरं तत्र रम्यं श्यामांबुपरिपूरितम् ॥ तस्यैव दक्षिणे भागे मल्लिंगं सर्वदुर्ल्लभम् ॥
॥ ३३ ॥ सोपि राजा महाबाहुर्दृष्ट्वा तत्परमाद्भुतम् ॥ संस्तुवन् जाह्नवीं देवीं विचचार वने तदा ॥ ३४ ॥ तस्य संचरतो देवि कस्मिं
श्चित्पर्वते वरे ॥ कन्यायुग्मं महैश्वर्य्यरूपं तत्र व्यदृश्यत ॥ ३५ ॥ नानालंकारसंयुक्तं मुक्तामणिविभूषितम् ॥ सितासित शुभांगं च
चलत्कुंडलशोभितम् ॥ ३६ ॥ पप्रच्छ राजा कन्ये ते के युवां निर्जने वने ॥ अहं तु सुखसंत्यक्तो व्रजामि निर्ज्जने वने ॥ ३७ ॥
भगीरथोस्मि हे कन्ये युवाभ्यां कुत्र गम्यते ॥ इति तद्देवि तं श्रुत्वा सिता प्रोवाच कन्यका ॥ ३८ ॥ गोप्यमस्ति न ते रूपं गंगास्मि
हि भगीरथ ॥ इयं या त्वसिता देवी सूर्य्यस्य तनया शुभा ॥ ३९ ॥ यमुनेति समाख्याता सर्वकल्मषनाशिनी ॥ दशधाहं महाराज निः
सरामि हिमालयात् ॥ ४० ॥ ज्येष्ठा श्रेष्ठतरा धारा त्वया सह गमिष्यति ॥ [illegible] संगमेष्यंति मे पुनः ॥ ४१ ॥ ॥ ४१ ॥

नाना नाम्न्यो महाराज भविष्यंति महीतले ॥ दर्शनात्स्पर्शनात्पुण्या यतो मे द्रवसंभवाः ॥ इदं गंगोत्तरं नाम तीर्थराड्ढि भगीरथ ॥
॥ ४२ ॥ ईश्वर उवाच ॥ इत्युक्त्वा तं महीपालं गंगा परमपाविनी ॥ जाता प्रवाहरूपा सा तरंगभंगिचंचला ॥ ४३ ॥ गंगोत्तरं समा
ख्यातं दक्षिणे मुनिसेवितम् ॥ तद्वामे याऽसिता देवी यमुना सा प्रकीर्तिता ॥ ४४ ॥ यामुनोत्तरमाख्यातं सर्वसिद्धिप्रदायकम् ॥ इति
तीर्थद्वयं यस्तु प्रातःकाले च संस्मरेत् ॥ ४५ ॥ दुःखानि तस्य नश्यंति यथा राज्ञो महेश्वरि ॥ नीत्वा तां तु शुभां धारां गंगाख्यां
पापनाशिनीम् ॥ ४६ ॥ निर्ययौ स्वपितृस्थाने महाराजो भगीरथः ॥ अतिक्रम्याऽनेकदेशान्समुद्रांतं महायशाः ॥ ४७ ॥ पूर्वाशासागरे
गंगा मिलिता सा सहस्रधा ॥ तीर्थं पुण्यतरं तद्वै गंगासागरसंगमम् ॥ ४८ ॥ यत्र कुत्रापि देवेशि स्मरणान्मुक्तिदायकम् ॥ तस्यापि
पितरो मुक्तिं प्राप्नुयुश्च सुदुर्लभाम् ॥ ४९ ॥ इति ते कथितं देवि गंगायाश्चावतारणम् ॥ भगीरथोपाख्यानं च महापातकनाशनम् ॥
॥ ५० ॥ इदं परममाख्यानं शृणु ते भक्तितत्परः ॥ पठेद्वापि महादेवि स नरो मुक्तिभाग्भवेत् ॥ ५१ ॥ इति श्रीस्कांदे केदारखण्डे
भगीरथोपाख्याने श्रीगंगावतरणं नाम ऊनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥ ॥ वसिष्ठ उवाच ॥ ॥ इदं च परमाख्यानं श्रुत्वा देवी
तु पार्वती ॥ उवाच भक्तिसंपन्ना भर्तारं परमेश्वरम् ॥ १ ॥ पार्वत्युवाच ॥ देवदेव जगन्नाथ भक्तानुग्रहतत्पर ॥ गंगाया दशधारास्तु
कथिता यास्त्वयाद्य मे ॥ २ ॥ नामानि चैव माहात्म्यं वद मे भूतभावन ॥ को वै पुण्यतरो देशो यत्र धारा गतास्तु ताः ॥ ३ ॥
माहात्म्यं विस्तराद्ब्रूहि श्रोतुका मास्मि साम्प्रतम् ॥ कुत्रता मिलिता भूयो ब्रह्मदेहसमुद्भवाः ॥ ४ ॥ स्थानानां च तथा तेषां माहा
त्म्यं सुतरां वद ॥ भक्तास्मि तव देवेश प्राणात्प्रियतरो ह्यसि ॥ ५ ॥ गोप्यं नैव स्वभक्तेषु कुर्वंति सततन्नराः ॥ ईश्वर त्वं जगत्कर्त्ता
जगद्धर्त्ता त्वमेव हि ॥ ६ ॥ त्वय्येव सर्वं देवेश प्रोतमेतज्जगत्त्रयम् ॥ के देशास्ते यत्र गंगा दशधा वद विस्तरात् ॥७॥ ईश्वर उवाच ॥
शृणु देवि वरारोहे यत्पृष्टोऽहं त्वयानघे ॥ अवाच्यमपि वक्ष्यामि नोक्तं कस्यापि यत्पुरा ॥ ८ ॥ गोपनीयं प्रयत्नेन रहस्यं परमाद्भु
तम् ॥ यस्य दर्शनमात्रेण हत्यानां कोटयस्तथा ॥ ९ ॥ नश्यंति देवदेवेशि यथाग्नेस्तूलराशयः ॥ शृणु पूर्वं यथा देवि पांडवा देवतां

शजाः ॥ १० ॥ गोत्रहत्यापराभूतास्तथा गुरुवधार्दिताः ॥ पांडोः पुत्रा महात्मानो विख्यातबलविक्रमाः ॥ ११ ॥ हत्वा द्रोणादिकान्
सर्वान्हत्यया परिपीडिताः ॥ संतप्तहृदयाः सर्वे शोकेन च समाकुलाः ॥ १२ ॥ भ्रष्टसर्वक्रियाश्चैव व्यासं वै शरणं ययुः ॥ व्यासमूचु
र्महात्मानं कल्मषाविष्टमानसाः ॥ १३ ॥ पांडवा ऊचुः ॥ भगवन्व्यास ते सर्वे वयं त्वच्छरणागताः ॥ पापात्मानोनिशं ब्रह्मन् कथं
मुक्तिं व्रजामहे ॥ १४ ॥ गोत्रहत्यासमाविष्टास्तथा गुरुवधार्दिताः ॥ त्वमेव शरणं नो वै आज्ञापय यथास्फुटम् ॥ १५ ॥ केन वै क
र्मणा ब्रह्मन् यास्यामो गतिमुत्तमाम् ॥ तद्ब्रूहि कृपयाविष्टो नप्तारस्ते यतो वयम् ॥ १६ ॥ व्यास उवाच ॥ शृणुध्वं पांडवाः सर्वे हं
तारो गोत्रिणां तथा ॥ सर्वस्य निष्कृतिर्दृष्टा न हंतुर्गोत्रिणं क्वचित् ॥ १७ ॥ विना केदारभवनं तत्र गच्छत सांप्रतम् ॥ यत्र ब्रह्मादयो
देवाः शिवदर्शनलालसाः ॥ १८ ॥ तपोनिष्ठाः कर्मपूतास्तपंति तप उत्तमम् ॥ यत्र गंगा सरिच्छ्रेष्ठा नानाधारात्मिकास्ति वै ॥ १९ ॥
यत्रेश्वरो महादेवो वर्त्तते ह्युमया सह ॥ गणैश्च शतशो भूपाः प्रमथाद्यैर्महाभटैः ॥ २० ॥ यत्र देवाः सगंधर्वा यक्षराक्षसपुंगवाः ॥
वृश्चिकार्द्धगते सूर्ये प्रत्यक्षं क्रीडयंति हि ॥ २१ ॥ नानावाद्यानि वाद्यंते श्रूयंते वेदनिःस्वनाः ॥ यत्र देशे मृतो जंतुः शिव एव न सं
शयः ॥ २२ ॥ तस्य क्षेत्रस्य माहात्म्यं को वा वर्णयितुं क्षमः ॥ अनेकतीर्थसंयुक्तः स्मृत्वा मोक्षमवाप्नुयात् ॥ २३ ॥ गच्छध्वं त्रिदश
स्थानं महापथसमीरितम् ॥ एतदेव परं स्थानं ब्रह्महत्यानिवारणम् ॥ २४ ॥ ईश्वर उवाच ॥ इति व्यासवचः श्रुत्वा पांडवा हृष्टमा
नसाः ॥ प्रणम्य तं परिक्रम्य ययुः कैलासपर्वते ॥ २५ ॥ तत्रैव निवसंतो वै ययुः परमिकां गतिम् ॥ यस्य तीर्थस्य सेवायाः शुद्धा
जाता महौजसः ॥ २६ ॥ इति तत्परमं स्थानं देवानामपि दुर्लभम् ॥ पंचाशद्योजनायामं त्रिंशद्योजनविस्तृतम् ॥ २७ ॥ इदं वै
स्वर्गगमनं न पृथ्वीं तामहो विभो ॥ आगंगाद्वारमर्यादं श्वेतांतं वरवर्णिनी ॥ २८ ॥ तमसातटतः पूर्वमर्वाग्बौद्धाचलं शुभम् ॥ केदारमंडलं
ख्यातं भूम्यास्तद्भिन्नकं स्थलम् ॥ २९ ॥ वात्सल्यात्तव देवेशि कथितो देश उत्तमः ॥ तिर्यग्योनिगतो वापि मृतः शिवपुरे वसेत् ॥
॥ ३० ॥ अनेकतीर्थसंयुक्तं नानापुण्यवनैर्युतम् ॥ अनेकशतसाहस्रशिवलिंगविराजितम् ॥ ३१ ॥ नानानदीनदाकीर्णं नदीसंगमशो

भितम् ॥ नानाक्षेत्रैः पुण्यतमं नानापीठसुयंत्रितम् ॥ ३२ ॥ काश्यादीनि च तीर्थानि गदितानि बहूनि वै ॥ तानि सर्वाणि सेवंते मूर्त्ती मंतस्तपःस्थिताः ॥ ३३ ॥ तस्मिन्नेव महाक्षेत्रे धारास्ता गदितास्तु याः ॥ नामतः शृणु ताः सर्वाः पुण्याः पापप्रणाशनाः ॥ ३४ ॥ मधुवर्णा तु या धारा मधुगंगा तु सास्मृता ॥ या वै क्षीरवहा धारा क्षीरगंगा द्वितीयका ॥ ३५ ॥ मध्यमा या श्वेतवर्णा स्वर्गद्वारा प्रकीर्त्तिता ॥ महाजलौघा सुश्रोणी धारा मंदाकिनी मता ॥ ३६ ॥ केदारनिलयख्याता गंगा केदारसंज्ञका ॥ निःसृता गंगया देवि पूर्वं शेषगृहीतया ॥ ३७ ॥ यासु स्नात्वा वरारोहे शिवसायुज्यमाप्नुयात् ॥ कामतोऽकामतो वापि भक्त्याऽभक्त्यापि पार्वति ॥ ३८ ॥ इति श्रीस्कांदे केदारखंडे चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ ॥ पार्वत्युवाच ॥ ॥ कथयस्व महादेव विस्तरान्मम क्षेत्रकम् ॥ केदारं नाम यत्प्रोक्तं स्वर्गमोक्षप्रदायकम् ॥ १ ॥ कानि कानि च तीर्थानि वर्त्तंते तत्र नायक ॥ किं पुण्यं किं फलं चात्र स्नानदानैर्महेश्वर ॥ ॥ २ ॥ कथमेतन्महज्जातं तीर्थानामुत्तमोत्तमम् ॥ एतत्सर्वं महादेव प्रियायै कथय प्रभो ॥ ३ ॥ ईश्वर उवाच ॥ इदं क्षेत्रं तु यत्प्रोक्तं मया देवि तवाधुना ॥ न त्यजामि कदाचिद्धि त्वत्तः प्रियतरं प्रिये ॥ ४ ॥ पुरातनो यथाहं वै तथा स्थानमिदं किल ॥ यदा सृष्टिक्रियां यां च मया वै ब्रह्ममूर्त्तिना ॥ ५ ॥ स्थितमत्रैव सततं परब्रह्मजिगीषया ॥ तदादिकमिदं स्थानं देवानामपि दुर्ल्लभम् ॥ ६ ॥ नंदिभृंग्यादयः सर्वे द्वारदेशे प्रतिष्ठिताः ॥ ब्रह्माद्यास्त्रिदशाः सर्वे न जानंति मम स्थलम् ॥ ७ ॥ यया त्वया यत्र देशे क्रीडितं विस्मृतं त्वया ॥ इदमेव महास्थानं सुगोप्यं सर्वजंतुषु ॥ ८ ॥ मृतो यत्र महादेवि शिव एव न संशयः ॥ धन्यास्ते पुरुषा लोके पुण्यात्मानो महेश्वरि ॥ ॥ ९ ॥ ये वदंत्यपि केदारं गमिष्याम इति क्वचित् ॥ पितरस्तस्यदेवेशि त्रिशतं कुलसंयुताः ॥ १० ॥ गच्छंति शिवलोके तु सत्यं सत्यं न संशयः ॥ यथा सतीनां त्वं चैव देवानां च यथा हरिः ॥ ११ ॥ सरसां सागरो यद्वत्सारितां जाह्नवी यथा ॥ पर्वतानां यथायं वै योगिनां याज्ञवल्क्यकः ॥ १२ ॥ भक्तानां च यथा देवि नारदो भक्त ईरितः ॥ शिलानां च यथा शालग्रामशिला तु वैष्णवीम् ॥ ॥ १३ ॥ अरण्यानां यथा प्रोक्तं वदर्य्यारण्यसंज्ञितम् ॥ धेनूनां च यथा कामधेनुर्वै परिकीर्त्तिता ॥ १४ ॥ मनुष्याणां यथा विप्रो विप्रा

र्णां ज्ञानदो यथा ॥ स्त्रीणां पतिव्रता यद्वत्प्रियाणां पुत्र एव च ॥ १५ ॥ पदार्थानां यथास्वर्णं मुनीनां च यथा शुकः ॥ सर्वज्ञानां यथा
व्यासो देशानामयमेवच ॥ १६ ॥ नराणां च यथा राजा सुराणां वासवस्तथा ॥ वसूनां धनदो यद्वत्पुरीणां मामकी यथा ॥ १७ ॥
रंभा चाप्सरसां यद्वद्गंधर्वाणां च तुंबुरुः ॥ क्षेत्राणां च तथा प्रोक्तं क्षेत्रं केदारसंज्ञितम् ॥ १८ ॥ शृणु देवि पुरा वृत्तं व्याधस्यैणस्य त
च्छृणु ॥ मृगहंतावसद्व्याधो ग्रामांते विकरालकः ॥ १९ ॥ मृगमांसाशनो नित्यं विक्रेता सर्ववस्तुनः ॥ एकदा स महान् व्याधो मृगान्
हंतुं गतो वने ॥ २० ॥ हतास्तत्र वनेदेवि मृगाश्च बहवस्तथा ॥ एवं हनन्मृगान्व्याधो ययौ केदारतीर्थके ॥ २१ ॥ गच्छतस्तस्य देवे
शि वने मुनिगणान्विते ॥ व्यदृश्यत मुनिश्रेष्ठो नारदो विचरन् गिरौ ॥ २२ ॥ एतस्मिन्नन्तरे सोपि व्याधो वै हृष्टमानसः ॥ योयं गच्छ
ति स्वर्णात्मा दिव्यरूपधरो मृगः ॥ २३ ॥ एम हत्वा स्वर्णमृयंमृगं स्वर्णमयोभवेः ॥ इति वै चिंतयित्वा तु व्याधः परमविस्मितः ॥
॥ २४ ॥ धनुः सज्जं चकाराशु बाणं संधाय कार्मुके ॥ यावन्निहंति तमृषिं तावदस्तं गतो रविः ॥ २५ ॥ इति तत्परमाश्चर्य्यं दृष्ट्वा व्या
धोतिविस्मितः ॥ यावद्गच्छाति चाग्रे तु ददर्श दर्दुरं विले ॥ २६ ॥ सर्प्पेण ग्रस्यमानं वै महाकायेन सत्वरम् ॥ यावद्ग्रसति मंडूकं सर्प्पः
कालात्मको ह्ययम् ॥ २७ ॥ तावद्बभूव मंडूको नागयज्ञोपवीतकः ॥ अर्द्धचंद्रधरः शीर्षे जटाटव्या विराजितः ॥ २८ ॥ कैलासाद्रिस
माभासो नृत्यद्गणविराजितः ॥ त्रिशूली नीलकंठो वै हस्तिचर्मांवरो विभुः ॥ २९ ॥ इति तत्परमाश्चर्य्यं दृष्ट्वा वै व्याधपूरुषः ॥ किमे
तद्वै कथं जातो मंडूकः सर्पवेष्टितः ॥ ३० ॥ रूपं कस्मादिदं जातं मंडूकस्यान्यदेहकः ॥ किं वा स्वप्नमहं मन्ये जाग्रतो मे कथं भवेत् ॥
॥ ३१ ॥ भ्रमो मे हि कथं जातः स्वस्थोस्मि यत एव हि ॥ अथ चेदं कथंचिद्वै भूतोपद्रवकं किमु ॥ ३२ ॥ सन्निकर्षमृतिर्मेद्य वर्त्तते
विकृतिर्यतः ॥ किं करोमि क्व गच्छामि वनेऽस्मिन्भूतसेविते ॥ ३३ ॥ को मे रक्षामिदानीं हि करिष्यंति महावने ॥ पश्यतो मे हि मं
डूको विकृतिं वै कथं गतः ॥ ३४ ॥ इति चिंतासमाविष्टमना व्याधो हि तत्क्षणात् ॥ पलायनपरो जातो महेशि वनतो यदा ॥ ३५ ॥
तावद्ददर्श व्याघ्रेण हन्यमानं मृगं किल ॥ पुंनागे सुन्दरांगे च महाव्याधो भयातुरः ॥ ३६ ॥ तमेव हन्यमानं च मृगं वै शिवरूपिणम् ॥

पंचवक्रं त्रिनेत्रं च व्यालयज्ञोपवीतिनम् ॥ ३७ ॥ हंता यो देवदेवेशि मृगराट्तस सपदि हतः ॥ व्याधेनान्येन केनापि बलीवर्दो बभूव ह ॥ ३८ ॥ आरुरोह वृषे तस्मिन्स वै पूर्वहतो मृगः ॥ शिवरूपधरः साक्षात्पश्यतस्तस्य सुंदरि ॥ ३९ ॥ इति तत्र पराश्चर्यं दृष्ट्वा व्याधोतिविस्मितः ॥ चिंतयामास बहुशः किमिदं किमिदं त्वहो ॥ ४० ॥ पुलकांकितसर्वांगो विस्मयाविष्टमानसः ॥ पुनर्ददर्श देवेशि तमेव नारदं मुनिम् ॥ ४१ ॥ तं दृष्ट्वा मनुजाकारं वने तस्मिन् भयावहे ॥ श्रुत्वा तु तन्मुखाद्वृत्तं तत्रत्यं मम वल्लभे ॥ ४२ ॥ व्याधः साधुरसाधुश्च वनं साधुरहोपरम् ॥ इति श्रुत्वा तु स व्याधो बभाषे नारदं मुनिम् ॥ ४३ ॥ कथं साधुरहं ब्रह्मन्नसाधुश्च कथं वनम् ॥ साधुसाध्विति यत्प्रोक्तं त्वया किं तद्वदस्व मे ॥ ४४ ॥ व्याधेरितं तु तच्छ्रुत्वा विहस्य नारदोब्रवीत् ॥ धन्योसि लुब्धकश्रेष्ठ यत्त्वया तीर्थमुत्तमम् ॥ ४५ ॥ आगतं तादृशं चैव दृष्टं वै शुभदर्शनम् ॥ तस्मादुक्तं च मे साधुस्त्वमसाधुश्च यच्छृणु ॥ ४६ ॥ यस्मादिदं त्वया व्याध ज्ञातं नेति शुभं परम् ॥ यस्य माहात्म्यतः शीघ्रं तिर्य्यग्योनिगतो ध्रुवम् ॥ ४७ ॥ अवाप्य शिवतां चैव पश्यतस्ते क्षणात्तथा ॥ इति तत्परमाश्चर्यं रूपं तद्वचनं प्रिये ॥ ४८ ॥ श्रुत्वा व्याधो महाभागः प्रणनाम भुवि क्षणात् ॥ धन्योस्मि कृतकृत्योस्मि मुने त्वद्दर्शनादहम् ॥ ४९ ॥ योहं तव मुखांभोजनिःसृतं सुकथामृतम् ॥ पिबामि मुनिशार्दूल त्राहि मां भवसागरात् ॥ ५० ॥ पापोहं मुनिहंताहं हिंसकोऽहं दुरासदः ॥ तारयेह महाभाग कथमेतादृशी गतिः ॥ ५१ ॥ भवेन्मे मुनिशार्दूल तद्वदस्व कृपान्वितः ॥ उवाच नारदस्तं वै अत्रैव निवस त्वीत ॥ ५२ ॥ इत्युक्त्वांतर्दधे देवि पश्यतस्तस्य वै प्रिये ॥ व्याधोपि निवसंस्तत्र ययौ वै परमां गतिम् ॥ ५३ ॥ इति तत्क्षेत्रमाहात्म्यं नाहं वर्षशतैरपि ॥ क्षमोस्मि वक्तुं सुश्रोणि शृण्वतोपि परां गतिम् ॥ ५४ ॥ तीर्थानि शृणु देवेशि गुह्यानि सुतरां प्रिये ॥ ५५ ॥ इति श्रीस्कांदे केदारखंडे व्याधवृत्तं नाम एकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥ ॥ ईश्वर उवाच ॥ ॥ दक्षिणस्यां शिवे देवि रेतःकुंडमिति श्रुतम् ॥ यत्पयःपानमात्रेण शिव एव न संशयः ॥ १ ॥ येन चिह्नेन तत्तीर्थं जायते शिवदायकम् ॥ पारदं दृश्यते तत्र तज्जलं बुद्बुदायते ॥ २ ॥ तस्य दर्शनमात्रेण नरो याति परां गतिम् ॥ किं पुनर्देवदेवेशि तत्पाने नितरां शिवे ॥ ३ ॥ मंदा

किन्यास्तु सुतटे तीर्थानि शृणु पार्वति ॥ तस्मादेव महातीर्थादधोदेशे शुभप्रदम् ॥ ४ ॥ शिवकुण्डमिति ख्यातं शिवलोकप्रदायकम् ॥
कपिलं शिवलिंगं वै वर्तते मोक्षदायकम् ॥ ५ ॥ यत्रोपोष्य सप्तरात्रं प्राणान्वै संत्यजेद्बुधः ॥ शिवसायुज्यतामेति यतो धारा विनिः
सृता ॥ ६ ॥ तदूर्द्ध्वे भृगुतुंगं वै पापिनामपि मुक्तिदम् ॥ गोघ्नः कृतघ्नो ब्रह्मघ्नो योपि विश्वासघातकः ॥ ७ ॥ श्रीशिलायां तपेद्यस्तु भृगु
तुंगान्महोन्नतात् ॥ प्राणांस्त्यजति देवेशि स परब्रह्मतामियात् ॥ ८ ॥ तस्मात्तीर्थादूर्ध्वभागे योजनद्वयसंमितम् ॥ रक्तवर्णं जलं तत्र
बुद्बुदाकारनिःसृतम् ॥ ९ ॥ इदं जलं परं गोप्यं न वदेद्दुष्टजंतुषु ॥ यस्य स्पर्शेन सर्वेपि धातवः स्वर्णतां प्रिये ॥ १० ॥ यांति लोहा
दयोदेवि सत्यं सत्यं न संशयः ॥ इदं हिरण्यगर्भाख्यं तीर्थं परमदुर्लभम् ॥ यस्य दर्शनमात्रेण नरो नारायणो भवेत् ॥ ११ ॥ तस्मादु
त्तरतो देवि स्फाटिकं लिंगमुत्तमम् ॥ यस्य वै पूजनात्सद्यः शिव एव भवेन्नरः ॥ १२ ॥ तस्मात्सप्तपदे पूर्वं वह्नितीर्थमिति स्मृतम् ॥
तस्य चिह्नं प्रवक्ष्यामि गदतो मे शृणु प्रिये ॥ १३ ॥ हिमांतर्गलितं तद्वै जलं वह्निमयं प्रिये ॥ पूजनं तस्य कर्त्तव्यं घृताक्ताहुतिभि
स्तथा ॥ १४ ॥ संतृप्तो जायते वह्निर्वरमिष्टं प्रयच्छति ॥ तत उत्तरतो देवि आश्चर्यं परमं शिवे ॥ १५ ॥ शैलाग्रशिखरात्तत्र जलं पत
ति भूतले ॥ तज्जलस्य कणादेवि मुक्ताश्चैव भवंति हि ॥ १६ ॥ तत्रैव भीमसेनेन पूजितोहं च मौक्तिकैः ॥ मुक्ताविद्रुमजालानां हर्म्या
णां च परंपरा ॥ १७ ॥ तेषु हर्म्येषु देवेशि गंधर्वाप्सरसस्तथा ॥ गायंति परमीशानं हर्षेण परिपूरिताः ॥ १८ ॥ तत्र यांति महादेवि
पुण्यात्मानो महाधियः ॥ ततः परं महान्पंथा यत्र गत्वा न शोचति ॥ १९ ॥ तस्मिन्महापथे देवि घृतपायसकर्दमाः ॥ स्वर्णभूमी
रत्नमयी स्वर्णपक्ष्युपशोभिता ॥ २० ॥ वृक्षाः स्वर्णमयास्तत्र प्रवाललतिकावृताः ॥ अनेके च महागृध्राः पन्नगाशनतेजसः ॥ २१ ॥
योजनायामविस्तारा महाव्यालाश्च सर्वशः ॥ सप्तप्राकारसंयुक्तं मम धाम महेश्वरि ॥ २२ ॥ यत्र ब्रह्मादयो देवि मां हि सेवंति नि
त्यशः ॥ महाभैरवहस्तस्थदंडेन कृतशासनाः ॥ २३ ॥ भूतवेतालप्रेताश्च कूष्मांडा जृंभकास्तथा ॥ नंदीभृंग्यादयश्चैव क्रीडंति सुखसं
वृताः ॥ २४ ॥ अहं महापथे नित्यं संस्थितो मम वल्लभे ॥ अस्मात्स्थानात् प्रियतरं नास्ति देवेशि मे क्वचित् ॥ २५ ॥ यः कश्चि

न्मानवो भक्त्या एवं वदति नित्यशः ॥ महापथं गमिष्यामि प्राणांस्त्यक्ष्यामि तत्र वै ॥ २६ ॥ सोपि मे देवदेवेशि प्रियात्प्रियतरोस्ति वै ॥ किं पुनर्मानवो लोके सर्वसंगविवर्जितः ॥ २७ ॥ मां न्यस्य हृदि च स्वीये गच्छेद्वै मम मंदिरे ॥ स्वर्गारोहगिरेर्मूर्ध्नि स्थानं मे परमं महत् ॥ २८ ॥ अयं तीर्थमयः शैलो यत्राहं संस्थितः सदा ॥ दर्शनादेव पापानि ब्रह्महत्यासमानि च ॥ २९ ॥ नश्यंते किमु देवेशि पूजनात्स्पर्शनात्तथा ॥ ३० ॥ माध्वीगंगा तु या धारा मंदाकिन्यास्तु संगमे ॥ शिवप्रदं महातीर्थं क्रौंचहर्तुः प्रकीर्त्तितम् ॥ ॥ ३१ ॥ यत्र स्नात्वा वरारोहे कैलासनिलये वसेत् ॥ क्षीरगंगा तु या धारा मंदाकिन्या तु संगता ॥ ३२ ॥ ब्राह्मं वै परमं तीर्थं यत्र स्नात्वा गणो भवेत् ॥ तस्माद्दक्षिणतो देवि यज्जलं बुद्बुदायते ॥ ३३ ॥ सामुद्रं तज्जलं प्रोक्तं स्पर्शनाच्छिवदायकम् ॥ मत्तो यो वामभागेस्ति शैलः परमसुंदरः ॥ ३४ ॥ पौरंदरः समाख्यातो यत्र मामिंद्र ईश्वरि ॥ समारराध पूर्वं वै स्वस्य च स्थितिहेतवे ॥ ३५ ॥ तत्रैव मे परं लिंगं दर्शनान्मुक्तिदायकम् ॥ मत्स्थानाद्दंडदशके हंसकुंडमिति स्मृतम् ॥ ३६ ॥ यत्र ब्रह्मा महादेवि हंसो भूत्वा समाययौ ॥ रेतःपानं तु कृतवान् गणैः संधर्षितस्तथा ॥ ३७ ॥ तद्धंसकुण्डमाख्यातं पितॄणां मुक्तिदायकम् ॥ पितॄणां श्राद्धकर्त्तारो गच्छेयुः परमं पदम् ॥ ३८ ॥ नरकस्थास्तु पितरो जन्मजन्मससुद्भवाः ॥ त्रिशूलिनो महादेवाश्चंद्रार्द्धकृतशेखराः ॥ ३९ ॥ वृषस्कंधास्थिताः सर्वे व्यालयज्ञोपवीतिनः ॥ भस्मांगरागसहिताः क्रीडेयुर्वै मया सह ॥ ४० ॥ इति तद्धंसकुण्डस्य माहात्म्यं वरवर्णिनि ॥ यस्माज्जलमयी भूमिः पदन्याससुकंपिता ॥ ४१ ॥ केदारक्षेत्रमाख्यातं तीर्थानां तीर्थमुत्तमम् ॥ दृष्ट्वा केदारनाथं मां पीत्वा रेतोजलं मम ॥ ४२ ॥ शिवलिङ्गं प्रजायेत हृदि तस्य महेश्वरि ॥ यस्मिन्कस्मिन्नपि शिवे काले वै यत्र कुत्र चित ॥ ४३ ॥ मृतः शिवपुरे याति पापी चापि शुभस्तथा ॥ यत्र देशे तु यो मर्त्यः केदारेश्वरदर्शने ॥ ४४ ॥ इत्युद्दिश्य मृतो देवि शिवो भवति मानवः ॥ शिवस्थानमिदं प्रोक्तमाविष्णुस्थानतः शुभम् ॥ ४५ ॥ भीमसेनशिलं देवि पर्य्यंकं मम कीर्त्तितम् ॥ त्रिगव्यूतौ मम स्थानाद्दक्षिणे शृणु तीर्थकम् ॥ ४६ ॥ गौरीतीर्थमिदं ख्यातं सर्वसिद्धिप्रदायकम् ॥ यत्र त्वया महेशानि मंदाकिन्यास्तटे पुरा ॥ ४७ ॥ ऋतुस्नानं कृतं तद्वै गौरीतीर्थमिति

स्मृतम् ॥ महासेनस्य उत्पत्यै विस्मृतं किं त्वयानघे ॥ ४८ ॥ तस्माच्चिह्नं प्रवक्ष्यामि येन तज्ज्ञायते शुभम् ॥ कटूष्णं तु जलं तत्र
सिंदूराभा तु मृत्तिका ॥ ४९ ॥ तत्स्थानं देवदेवेशि न त्यजामि कदाचन ॥ तत्र गौरीश्वरत्वेन ख्यातोहं शिवलोकदः ॥ ५० ॥ स्नानं
करोति यस्तत्र मृत्तिकां शिरसा वहेत् ॥ स वै मम प्रियतरो यथा त्वं मम वल्लभा ॥ ५१ ॥ अत्र यद्वै कृतं कर्म्म तद्वै कोटिगुणं भवेत् ॥
तस्माद्दक्षिणतो देवि गोरक्षाश्रमरक्षकम् ॥ ५२ ॥ यत्र सिद्धो महादेवि गोरक्षो वसेतेनिशम् ॥ तल्लिंगं तु प्रवक्ष्यामि शृणु पुण्यतमं
स्थलम् ॥ ५३ ॥ महातप्तजलं तत्र वर्त्तते सर्वदैव हि ॥ तत्र स्थित्वा सप्तरात्रं जपन्वै शिवमुत्तमम् ॥ ५४ ॥ सिद्धो भवति देवेशि
यथा गोरक्ष उत्तमः ॥ तस्मिन्नेव महाशैले चतस्रो निम्नगाः स्मृताः ॥ ५५ ॥ देविका भद्रदा शुभ्रा मातंगीति समाहृताः ॥ देविकायां
नरः सप्तरात्रं मिथ्यादिवर्जितः ॥ ५६ ॥ जपन् षडक्षरं देवि पश्यते स्पर्शमौक्तिकम् ॥ यस्य स्पर्शाद्धातुवस्तु स्वर्णतां यात्यसंशयम् ॥
॥ ५७ ॥ तथान्यासु महादेवि स्नात्वा सिद्धिमवाप्नुयात् ॥ गौरीतीर्थादूर्ध्वभागे पर्वते सौम्यदिक्स्थिते ॥ ५८ ॥ चीरवासा भैरवस्तु
क्षेत्रं रक्षति मामकम् ॥ तस्मै चीरादिकं दत्वा सर्वं पुण्यं लभेन्नरः ॥ ५९ ॥ अन्यथा तत्फलं सर्वं हरते भैरवः शिवः ॥ तस्मात्सर्वप्रयत्ने
न संपूज्य भैरवं विशेत् ॥ ६० ॥ तस्मिन्नेव महाशैले काली वसति दुःसहा ॥ तां नमस्कृत्य गच्छेत पर्य्यंके मामके शिवे ॥ ६१ ॥
गौरीतीर्थापरेभागे क्रोशे परमदुर्ल्लभम् ॥ वैनायकं तथा द्वारं द्वास्थत्वे संस्थितः शिवे ॥ ६२ ॥ गणेशस्तावकः पुत्र अंगरागेण यः
कृतः ॥ स्थापितो द्वारि देवेशि त्वया च स्नाप्यमानया ॥ ६३ ॥ मया यस्य शिरश्छिन्नं पतितं शिवक्षेत्रके ॥ प्रसन्नेन मया देवि पुनः
कारिवरं शिरः ॥ संयोजितं तदंगे तु ततो गजमुखोभवत् ॥ ६४ ॥ सम्पूज्य तं गणेशं तु नानानैवेद्यद्रव्यकैः ॥ गच्छेन्मम महास्थाने
यत्र गत्वा शिवो भवेत् ॥ ६५ ॥ कालिकेति समाख्याता नदी गंगांगसंभवा ॥ वासुकिप्रमुखा नागा यां हि सेवंति नित्यशः ॥ ६६ ॥
शेषेश्वरो महादेवो यत्रास्ति हि सरोवरे ॥ उच्छलंति महानागा भस्मीकुर्वंति तत्स्थलम् ॥ ६७ ॥ क्रुद्धा भवंति हि यदा नान्यदा ते
महाविषाः ॥ तन्मूले कालिका देवि वर्तते तेन कालिका ॥ ६८ ॥ मंदाकिन्यास्त्रिविक्रय्याः संगमातीवपुण्यदः ॥ यत्र तिष्ठामि काली

शनाम्ना स्वस्थानदो ह्यलम् ॥ ६९ ॥ इति ते कथितं देवि केदारेश्वरक्षेत्रकम् ॥ श्लोकार्द्धं श्लोकमेकं वा श्रुत्वोक्त्वा च लभेच्छिवम् ॥
॥ ७० ॥ इति श्रीस्कान्दे केदारखंडे केदारमाहात्म्यं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ ईश्वर उवाच ॥ ॥ अथान्यत्तु प्रव
क्ष्यामि क्षेत्राणां क्षेत्रमुत्तमम् ॥ केदारमंडले एव यत्र गत्वा हरिर्भवेत् ॥ १ ॥ त्रिविक्रमातटे पश्चान्नारायणसुतीर्थकम् ॥ यस्य दर्शनमात्रेण
हरिभक्तिः प्रवर्द्धते ॥ २ ॥ त्रिविक्रमातटादूर्द्ध्वं सार्द्धक्रोशे महत्फलम् ॥ नारायणक्षेत्रमिति तस्मिन्वै यज्ञपर्वते ॥ ३ ॥ यत्र ब्रह्मादयो देवा
हरिपूजनमानसाः ॥ यजयामासुरर्पितं नैवेद्यैर्हवनैस्तथा ॥ ४ ॥ तल्लिंगं तु प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ॥ नित्यं तत्र स्थितो वह्निर्दृ
श्यते मुक्तिदो महान् ॥ ५ ॥ विवाहस्थानमेतद्धि गौरीशंकरयोः शुभम् ॥ तत आरभ्य वसते नित्यमत्र धनंजयः ॥ ६ ॥ उपोष्य दशरात्रं
तु पापैः कोटिभिरावृतः ॥ प्राणांस्त्यजति पूतात्मा वैकुंठनिलये वसेत् ॥ ७ ॥ सरस्वतीति विख्याता धारा परमपावना ॥ श्रीविष्णो
र्नाभितस्तत्र आयाति दुरितापहा ॥ ८ ॥ नमो नारायणेत्युक्त्वा मंत्रपूतं जलं पिबेत् ॥ न तस्य पुनरावृत्तिः कल्पकोटि शतैरपि ॥ ९ ॥
सकृदाचम्य देवेशि नारायणविनिःसृतम् ॥ जलं सारस्वतं देवि किं तेन न कृतं भवेत् ॥ १० ॥ धन्या लोके नरा ये तु नारायणसमी
पके ॥ जलं पिबंति तेषां वै दश पूर्वा दशापरे ॥ ११ ॥ तृप्ता यांति परं स्थानं पितरो हृष्टमानसाः ॥ तस्मिन्नग्नौ तु ये मर्त्या एकामप्या
हुतिं ददुः ॥ १२ ॥ ते सर्वे मुक्तिमापन्नाः पुनरावृत्तिदुर्लभाः ॥ हवनं कारयेत्तत्र नारायणसुमंत्रतः ॥ १३ ॥ धन्यो भवति लोकेषु नरः
पापविव र्जितः ॥ भस्मनो धारणं कृत्वा सर्वदेवमयो भवेत् ॥ १४ ॥ माहात्म्यं भस्मनः केन शक्यते मम वल्लभे ॥ तद्भस्मधारकं दृष्ट्वा
पापं वर्षकृतं दहेत् ॥ १५ ॥ तत्रैव ब्रह्मकुंडाख्यं तीर्थं परमदुर्लभम् ॥ स्नात्वा यत्र वरारोहे ब्रह्मलोकगतिर्भवेत् ॥ १६ ॥ तस्य चिह्नं प्रव
क्ष्यामि तज्जलं पीतवर्णकम् ॥ तत्र चाल्पतरा नागाः स्थापिता भीतिदाः प्रिये ॥ १७ ॥ न दंशंति च ते नागा भीतिकारणमेव ते ॥
ब्रह्मणः पूजनं कृत्वा स्नायात्तत्र शुभास्पदे ॥ १८ ॥ तस्य वै दक्षिणे भागे विष्णुतीर्थमिति स्मृतम् ॥ यत्र स्नात्वा वरारोहे विष्णुसायुज्य
माप्नुयात् ॥ १९ ॥ तत्र सारस्वते कुंडे स्नात्वा पापक्षयो भवेत् ॥ प्रदक्षिणं हरेः कृत्वा अश्वमेधफलं लभेत् ॥ २० ॥ दृष्ट्वा नारायणं देवं

स गच्छेच्छिवमंदिरे ॥ कल्पकोटिशतं देवि नरो मम पुरं वसेत् ॥ २१ ॥ तत्रस्त्रिविक्रमातीरे ख्यातं जलमयपत्तनम् ॥ यत्रगत्वा महादे
वि पूजितोहंजले शिवः ॥ २२॥ तत्र वै ममलिंगं वै जलेश्वर इतिस्मृतः ॥ यद्दर्शनान्नरोयाति शिवलोके न संशयः ॥ २३ ॥ तदादीदं
महादेवि जातं जलमयपत्तनम् ॥ पुण्यान्येव जलान्यत्र योजनायामविस्तृते ॥ २४ ॥ अत्र स्थित्वा सप्तरात्रं जपन्वै ध्यानतत्परः ॥ सि
द्धो भवति पूतात्मा यथाहं मम वल्लभे ॥ २५ ॥ तत्रैव च नदी रम्या सर्वपापप्रशोषिणी ॥ दक्षिणे हरिदा नाम्ना स्नात्वानंतफलप्रदा ॥
॥ २६ ॥ इति श्रीस्कांदे केदारखंडे नारायणाश्रममाहात्म्यं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३॥ ईश्वर उवाच ॥ ॥ पुनरन्यत्
प्रवक्ष्यामि क्षेत्राणामुत्तमोत्तमम् ॥ भिल्लक्षेत्रमितिख्यातं सर्वपापप्रणाशनम् ॥ १ ॥ यत्राहं भिल्लरूपेण क्रीडितोस्मि त्वया सह ॥ भि
ल्लांगण मिति ख्यातः पर्वतोतीव सुंदरः ॥ २ ॥ तस्माद्वै पर्वताद्रम्या गंगाधारा विनिःसृता ॥ भिल्लांगणेति विख्याता महापापविनाशि
नी ॥ ३ ॥ तत्रैव मम लिंगं वै भिल्लेश्वर इतीरितः ॥ तस्य वै पूजनान्मर्त्यो दर्शनात्स्मरणात्तथा ॥ ४ ॥ महापातककोटिस्थो नरः
शुद्धो भवेच्छिवे ॥ चिह्नं क्षेत्रस्य वक्ष्यामि शृणु देवि मम प्रिये ॥ ५ ॥ भिल्लरूपी महादेवः कालकंबलवस्त्रकः ॥ वर्त्तते मध्यरात्रे तु
नानाभिल्लगणैर्वृतः ॥ ६ ॥ वादित्राणां च शब्दाश्च श्रूयंते भिल्लशब्दिताः ॥ भंभांभंभेति सततं तथा दुंदुभिनिःस्वनाः ॥ ७ ॥ नानारू
पधरा भिल्ला विचरंति तदंगणे ॥ भिल्लांगणोद्भवायां तु स्नाति रुद्रकले वरः ॥ ८ ॥ अतिगुह्यतमं पीठं पुराणेषु च गोपितम् ॥ त्यक्त्वा
हारविहारश्च जपेद्यो दशरात्रकम् ॥ ९ ॥ अरिवर्णोपि मंत्रश्च सिद्धो भवति निश्चितम् ॥ नित्यं नाथादयः सिद्धा अत्रैव जपतत्पराः ॥
॥ १० ॥ सिद्धिं प्राप्ताः पुरा देवि माद्दशास्ते न संशयः ॥ कामेश्वरीं महादेवीं पूजयेद्भक्तितत्परः ॥ ११ ॥ दशाश्वमेधयज्ञीयं फलं प्राप्नो
ति मा नवः ॥ देव्या वै दक्षिणे भागे शिवलिंगं महत्तरम् ॥ १२ ॥ यस्य संदर्शनादेव शिवभक्तो भवेन्नरः ॥ तदूर्द्ध्वं क्रोशखंडार्द्धे नदी
सुरसुता मता ॥ १३ ॥ यत्र पूर्वं मया देवि धृतं भस्म शुभं प्रिये ॥ तद्भस्मधारणार्थाय वासवाद्या दिवौकसः ॥१४॥ आजग्मुस्तन्नदीतीरे ॥ ४६
कन्यांत्वेनांसमादधुः ॥ तस्यांस्नात्वानरोभक्त्या वाजपेयफलं लभेत् ॥ १५ ॥ तस्या वै दक्षिणे भागे शिला मातलिका मता ॥

स्पर्शं कृत्वा शिलायां तु इन्द्रस्य नगरे वसेत् ॥ १६ ॥ भिल्लांगणं महाक्षेत्रं स्मृत्वा पापक्षयो भवेत् ॥ पंचयोजनविस्तीर्णं चतुर्योजनमायतम् ॥ १७ ॥ सर्वपापहरं पुण्यं तद्दृष्ट्वा शिवतां व्रजेत् ॥ एतत्क्षेत्रस्य यो मर्त्यो दक्षिणं चैव गच्छति ॥ १८ ॥ सप्तद्वीपवती तेन पुण्या प्रादक्षिणीकृता ॥ अस्मिन् यत्क्रियते कर्म तदनंतगुणं भवेत् ॥ १९ ॥ तस्मात्सर्वप्रयत्नेन नास्मिन्पापं समाचरेत् ॥ पुण्यमेव प्रकर्त्तव्यं स्वस्य वै भूतिमिच्छता ॥ २० ॥ नानामणिगणा यत्र तथा स्वर्णाकराणि च ॥ वर्त्तंते यत्प्रदेशे तु तदन्यः कोस्ति भूतले ॥ ॥ २१ ॥ अनेकानि च लिंगानि नदीधाराशतानि च ॥ पुण्यप्रदानि पुण्यानि विस्तरात्केनकथ्यते ॥ २२ ॥ शिवलोकप्रदान्येव पर्यांस्यत्र महेश्वरि ॥ दर्शनात्पूजनात् ध्यानाच्छिवलिंगान्यनेकशः ॥ २३ ॥ शिवलोकप्रदान्येव सत्यं सत्यं न संशयः ॥ अनेकानि प्रयागानि नदीनां संगमानि च ॥ २४ ॥ भिल्लांगणोद्भवायां तु गंगाधारा महत्तरा ॥ तस्याः संदर्शनादेव नरः पापैः प्रमुच्यते ॥२५॥ इति ते कथिता देवि षष्ठी धारा मया शुभा ॥ यत्पयःपानमात्रेण शिवो भवति निश्चितम् ॥२६॥ यः पठेत्प्रातरुत्थाय माहात्म्यं सुदुर्लभम् ॥ भिल्लांगणस्य सुश्रोणि शृणुयादपि निष्कलिः ॥ २७ ॥ इति श्रीस्कांदे केदारखण्डे भिल्लांगणमाहात्म्यं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ ईश्वर उवाच ॥ ॥ अथान्यत्ते प्रवक्ष्यामि क्षेत्रं परमसुंदरम् ॥ यच्छ्रुत्वापि नरो भक्त्या सर्वपापैः प्रमुच्यते॥ ॥ १ ॥ तस्य दक्षिणपार्श्वे वै बगलाक्षेत्रमुत्तमम् ॥ चतुर्योजनविस्तीर्णं चतुरर्द्धं सुविस्तृतम् ॥ २ ॥ तत्पीठं परमं देवि मया नैव प्रकाशितम् ॥ त्वत्प्रियत्वादिदानीं हि गदितं ते सुदुर्लभम् ॥ ३ ॥ नानातीर्थसमायुक्तं नानालिंगविराजितम् ॥ यस्य संदर्शनादेव नरो देवीपुरं वसेत् ॥ ४ ॥ बगला तु महादेवी सर्वतंत्रेषु विश्रुता ॥ ब्रह्मास्त्रविद्या विख्याता शत्रुस्तंभनकारिणी ॥ ५ ॥ यस्याः स्मरणमात्रेण शत्रुः पंगुर्भवेद्ध्रुवम् ॥ तत्स्थानं तु मया प्रोक्तं सर्वकामफलप्रदम् ॥ ६ ॥ सप्तरात्रं निराहारो जपन्वै बगलामनुम् ॥ सिद्धिं प्राप्नोति विपुलं खेचरीं मम वल्लभे ॥ ७ ॥ बलिदानादिभिर्यस्तु बगलां तु समर्चति ॥ तस्य पुण्यफलं देवि कृत्स्नशः कथ्यते शृणु ॥ ८ ॥ सर्वयज्ञेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ॥ तत्फलं प्राप्नुयान्मर्त्यो बगलायास्तु दर्शनात् ॥ ९ ॥ देव्या वै दक्षिणे भागे धारा पुण्यप्रमोदिनी ॥

तस्या वै उत्तरे तीरे विष्णुमूर्त्तिश्चतुर्भुजा ॥ १० ॥ स्नात्वा पुण्यप्रमोदिन्यां दृष्ट्वा विष्णुं सनातनम् ॥ कृतकृत्यो भवेन्मर्त्यो न कृतं किं
न तेन वै ॥ ११ ॥ ततो दक्षिण दिग्भागे गव्यूतौ शृणु विस्मयम् ॥ त्रिशीर्षा तु महादेवि देवी वै वर्त्तते शिवे ॥ १२ ॥ नित्यं तत्र
४७ ॥ महासिंहो गर्जंस्तिष्ठति चासकृत् ॥ नानानार्य्यः श्यामदेहास्तथा श्यामांबराः प्रिये ॥ १३ ॥ तथा करालवदना विचरंति तया सह ॥ अ. ४६
वादित्राणि च वाद्यंते झणंकाररवास्तथा ॥ १४ ॥ तेन शब्देन यस्तत्र त्रस्तो भवति मानवः ॥ म्रियते स न संदेहो दूयते क्षणतस्तथा ॥
॥ १५ ॥ धैर्यवान्मंत्रसंयुक्तो जापकः शिवतत्परः ॥ परनिंदापरो यो न परस्त्रीषु पराङ्मुखः ॥ १६ ॥ न तस्य भयलेशोस्ति तिष्ठतस्तत्र
पीठके ॥ शीघ्रं वै लभते सिद्धिं यथा गोरक्षकादयः ॥ १७ ॥ तत्र कुंडं समाख्यातं वैष्णवं पापिदुर्ल्लभम् ॥ यत्र स्नानेन तपसा मदर्थं पाप
दुर्ल्लभम् ॥ १८ ॥ यत्र स्वर्णं वरारोहे कोटीनां दश पंच च ॥ वर्त्तते भूतले न्यस्तं कुबेरेण महात्मना ॥ १९ ॥ ताम्रवर्णीति विख्याता स
रितां सरिदुत्तमा ॥ वामभागे महादेवि सर्वकामफलप्रदा ॥ २० ॥ प्रोक्तानि तव तीर्थानि समासेन मयात्र वै ॥ विशेषेण समाख्यातुं
नोत्सहे शतवर्षकैः ॥ २१ ॥ इति ते बगलाक्षेत्रं पापराशिदवं मया ॥ प्रोक्तं त्वत्प्रियहेतुत्वात्सर्वत्र भुवि गोपितम् ॥ २२ ॥ नवदेत्पिशुना
येदं मद्भक्तिरहिताय च ॥ पठेद्विद्वत्सु मंत्रज्ञो ब्राह्मणानां सभासु च ॥२३॥ य इदं श्रावयेद्विद्वान्पठेद्वापि स्वयं क्वचित् ॥ शृणुयादपियो
मर्त्यो न वै यमपुरे वसेत् ॥ २४ ॥ इति श्रीस्कांदे केदारखण्डे तीर्थमाहात्म्ये बगलाक्षेत्रमाहात्म्यं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ईश्वर उवाच ॥ ॥ अथान्यदस्ति देवेशि पीठं प्रत्ययकारकम् ॥ शाकंभरी यत्र जाता मुनीनां त्राणकारणात् ॥ १ ॥ तत्पीठं परमं
प्रोक्तं सर्वपापप्रणाशनम् ॥ गत्वा शाकंभरीपीठे नत्वा शाकंभरीं तथा ॥ २ ॥ दशाश्वमेधयज्ञीयफलं प्राप्नोति मानवः ॥ तस्य चिह्नं
प्रवक्ष्यामि शृणु तत्वेन सुंदरि ॥ ३ ॥ शाकवृक्षो महानेको वर्त्तते तत्र सुंदरि ॥ तत्रायाति तदा सिंहो देव्या वै प्रियकारणात् ॥ ४ ॥
तत्रैको वसते नाग एलापर्णेति विश्रुतः ॥ श्यामो बृहच्छिरास्तत्र तत्फणाविलसन्मणिः ॥ ५ ॥ अथाऽन्यत्ते प्रवक्ष्यामि विस्मयं परमं ॥ ४७ ॥
महत् ॥ कृष्णपक्षे चतुर्दश्यां कार्त्तिके मासि सुव्रते ॥ ६ ॥ शंकरे पर्वते तत्र दीपानां ततिरुज्वला ॥ संदीपयति तद्देशं देव्याः पीठे परे

तव ॥ ७ ॥ सुरनार्य्यो नृत्यमाना दीपान् संगृह्य पार्वति ॥ आयांति देवि ते पार्श्वे किंकिणीक्वणितैर्युताः ॥ ८ ॥ देव्या वै दक्षिणे भागे लिंगं मारकतं मम ॥ फणी वसति संछाद्य लिंगं परमपुण्यदम् ॥ ९ ॥ तस्य वै वामभागे तु नदी वै नंदिनी मता ॥ तस्यां नद्यां सकृत्स्नात्वा लभते वै परां गतिम् ॥ १० ॥ भैरवस्तत्प्रदेशे वै रुरुनाम्नेति विश्रुतः ॥ घंटाशतसमायुक्तो नत्वा तं संविशेत्ततः ॥ ११ ॥ तस्य वै वामभागे तु शुक्रस्याश्रममंडलम् ॥ नानाविधानि लिंगानि मम संति महेश्वरि ॥ १२ ॥ योजने पर्वते रम्ये शौक्रे परमके शुभे ॥ ताम्रादिधातवस्तत्र वर्त्तन्ते निश्चितं प्रिये ॥ १३ ॥ लक्षणं ते प्रवक्ष्यामि येन ते प्रत्ययो भवेत् ॥ शर्करास्ताम्रवर्णाश्च तथा स्वर्णाः क्वचित्तथा ॥ १४ ॥ द्वियोजनसमाकीर्णं योजनत्रयमायतम् ॥ नानातीर्थसमायुक्तं पीठं शाकंभरं तव ॥ १५ ॥ गुह्याद्गुह्यतरं क्षेत्रं दर्शनात् पापनाशकम् ॥ यत्र स्थित्वा पंचरात्रं नियतो नियताशनः ॥१६॥ प्राप्नोति विपुलां सिद्धिं जपन्वै जगदंबिकाम् ॥ इति तत्परमं क्षेत्रं कथितं ते मयानघे ॥ १७ ॥ इति श्रीस्कांदे केदारखंडे शाकंभरीक्षेत्रमाहात्म्यवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ श्रीपार्वत्युवाच ॥ ॥ देवाधिदेव सर्वज्ञ सर्वकर्त्तः प्रभो शिव ॥ कथितानि त्वया देव क्षेत्राणि स्वर्गदानि तु ॥ १ ॥ श्रुतं केदारभवनं क्षेत्राणामुत्तमोत्तमम् ॥ शिवक्षेत्रस्य माहात्म्यश्रवणे मतिरस्ति मे ॥ २ ॥ यस्य दर्शनमात्रेण कृतकृत्यो भवेन्नरः ॥ यत्र गत्वापि पितरः स्वर्गच्छंति महाबलाः ॥ ३ ॥ घोरे कलियुगे देव नराः पुण्यविवर्जिताः ॥ कथं तेषां गतिर्देव भविष्यति घृणा मम ॥ ४ ॥ केन वै कर्म्मणा देव ब्रह्महत्यादिसंयुतः ॥ संतरेद्देवदेवेश संसारार्णवविस्तरम् ॥ ५ ॥ ईश्वर उवाच ॥ शृणु देवि वरारोहे कथयामि तवानघे ॥ येन वै कर्म्मणा देवि प्राप्नुयुः परमां गतिम् ॥ ६ ॥ मम क्षेत्राणि पंचैव भक्तप्रीतिकराणि वै ॥ केदारं मध्यमं तुंगं तथा रुद्रालयं प्रियम् ॥ ७ ॥ कल्पकं च महादेवि सर्वपापप्रणाशनम् ॥ कथितं ते महाभागे केदारेश्वरमंडलम् ॥ ८ ॥ अन्यान्यपि शृणु प्राज्ञे धन्या ते मतिरीदृशी ॥ कथितं ते मया यत्तु केदारभवनं प्रिये ॥ ९ ॥ तस्माद्दक्षिणदिग्भागे योजनत्रयसंमिते ॥ मध्यमेश्वरक्षेत्रं हि गोपितं भुवनत्रये ॥ १० ॥ तस्य वै दर्शनान्मर्त्त्यो नाकपृष्ठे वसेत्सदा ॥ शृणु देवि पुरा वृत्तं यथातत्त्यं सुपुण्यदम् ॥११॥ गौडदेशे

स्कं. पु. वसन्विप्रो वेदवेदांग पारगः ॥ रूपवान् गुणवान्दांतः पुण्यकर्म्मसु निष्ठितः ॥ १२ ॥ एकदा स महाभागो मध्यमेश्वरदर्शने ॥ मतिं के. खं.
४८ ॥ चकार धन्ये वै पितॄणां तारणाय वै ॥ १३ ॥ निर्विघ्नार्थं च यात्रायां संपूज्यादौ गणेश्वरम् ॥ त्रीन्ब्राह्मणान्पूजयित्वा शैवान्पाशुपतव्र अ. ४७
तान् ॥ १४ ॥ निर्ययौ स्वगृहात्तूर्णं शिवसन्यस्तमानसः ॥ जपन्वै परमं देवं धृत्युत्साहयुतो ह्यलम् ॥ १५ ॥ आगत्य सहसा क्षेत्रे गं
गाद्वारे महामतिः ॥ तत्र स्नात्वा विधानेन ब्राह्मणाश्चैव तर्पिताः ॥ १६ ॥ गंगाजलं समाहृत्य ततः केदारमंडले ॥ प्रपश्य नानातीर्थानि
कुब्जाम्रप्रमुखानि तु ॥ १७ ॥ दृष्ट्वा श्रीभरतं देवं वसिष्ठाश्रममाययौ ॥ दृष्ट्वा भागीरथीं गंगामलकनंदासमन्विताम् ॥ १८ ॥ प्रणनाम
महाप्राज्ञो भुवि भक्तिसमन्वितः ॥ देवतीर्थे तथा स्नात्वा दृष्ट्वा रामं रमापतिम् ॥ १९ ॥ ततः श्रीक्षेत्रके पुण्येऽलकनंदातटे शुभे ॥ तत्रत्ये
षु च तीर्थेषु भक्त्या स्नात्वा महेश्वरि ॥ २० ॥ गतोन्येषु च तीर्थेषु शिवभक्तिप्रदेषु च ॥ मंदाकिन्यास्तटे रम्ये नानामुनिजनाश्रमे ॥
॥ २१ ॥ अगस्त्यादीन्महाभागान्नत्वा विप्रोनलाश्रये ॥ राजराजेश्वरीं देवीं नत्वा संपूज्य यत्नतः ॥ २२ ॥ कालीं चैव नमस्कृत्य
सरस्वत्यास्तटे शुभे ॥ ययौ तत्क्षेत्रके पुण्ये विषमे पददुर्गमे ॥ २३ ॥ अनेकतीर्थसंस्नातो ययौ तत्क्षेत्रके शुचिः ॥ अशुचिर्योऽभिग
च्छेत तत्क्षेत्रे मध्यमेश्वरे ॥ २४ ॥ अकस्माद्वृष्टिपातो वै करकाहिमसंयुताः ॥ वज्रपातादिकं चैव जायते नैव संशयः ॥ २५ ॥ तस्मात्स
र्वप्रयत्नेन शुचिर्भूत्वा समाहितः ॥ संगच्छेन्मध्यमं धाम मम चैव महेश्वरि ॥ २६ ॥ सोपि तत्र गतो देवि निराहारो दिनत्रयम् ॥ जागरं
कृतवांस्तत्र मध्यमेश्वरसन्निधौ ॥ २७ ॥ ततश्चतुर्थदिवसे प्रातरुत्थाय चासनात् ॥ शिवं नत्वा महेशानं भक्तितः परमेश्वरम् ॥ २८ ॥
ततः सरस्वतीतीरे स्नात्वा चैव यथाविधि ॥ पितॄन्संपूज्य विधिवत् पितॄन्संतर्प्य चोदकैः ॥ २९ ॥ पितॄन्संपूज्यविधिवद्दपकुण्डे समाय
यौ ॥ तत्रा पिविधिवत्स्नात्वा शिवकुण्डे ययौ ततः ॥ ३० ॥ तत्रा पिविधिनास्नात्वा पितॄन्संतर्प्यचोदकैः ॥ नमस्कृत्वा च तत्क्षेत्रं परि
क्रम्य शिवं पुनः ॥ ३१ ॥ संपूज्य विविधैर्द्रव्यैर्नारिकेलादिभिस्तथा ॥ तत्रत्यानथ संपूज्य यथाशक्त्या हि ब्राह्मणान् ॥ ३२ ॥ आययौ ॥ ४९ ॥

भक्तिसंपन्नो दृष्ट्वा दर्शनमद्भुतम् ॥ अथास्मिन्नेव मार्गे हि ददर्श ब्रह्मराक्षसम् ॥ ३३ ॥ ऊरुस्रवद्गलत्पूर्वकृमिविष्ठाशताकुलम् ॥ महोव्रतं

महाश्यामं बृहद्दंष्ट्रा करालकम् ॥३४॥ हाहाकाररवं विप्रो दृष्ट्वा तं भयविह्वलः ॥ न गंतुं न तथा स्नातुं न शक्नोति स्म पार्वति ॥३५॥
चिंतयामास बहुशो भयविह्वललोचनः ॥ केन पापेन दृष्टोसौ विकरालो भयंकरः ॥३६॥ मामेकं रहसि प्राप्तं भक्षयिष्यति सांप्रतम् ॥
किं करोमि क्व गच्छामि कथमस्मात्प्रमुच्यते ॥ ३७ ॥ हा तात मातरित्येवं चिंतया स परिप्लुतः ॥ तं विप्रं राक्षसो दृष्ट्वा नष्टमोहोऽभ
वत्क्षणात् ॥ ३८ ॥ पापस्य च चतुर्थांशो नष्टस्तद्दर्शनात्प्रिये ॥ उवाच भयसंविग्नं ब्राह्मणं पथि संस्थितम् ॥ ३९ ॥ नत्वा भक्तिसमा
युक्तो विकाश्य वदनं मुहुः ॥ ब्रह्मराक्षस उवाच ॥ ४० ॥ भो भो ब्रह्मन्महापुण्य माभैषीर्मम निश्चितम् ॥ गतो मोहभरो मेद्य दर्शनात्ते
महेश्वर ॥ ४१ ॥ गतं मे पातकं देव दर्शनादेव ते परम् ॥ भाषणादपि पापानि नष्टानि सुतरां तथा ॥ ४२ ॥ यास्यामि शिवलोकेहं
त्वत्प्रसादान्न संशयः ॥ धन्योस्मि कृतकृत्योस्मि निष्कृतिर्मे परागता ॥ ४३ ॥ ईश्वर उवाच ॥ इति श्रुत्वा वचस्तस्य सामपूर्वं यश
स्विनि ॥ सहसा विगतत्रासः समभाषत तं ततः ॥ ४४ ॥ ब्राह्मण उवाच ॥ कस्त्वं करालवदनो वनेस्मिन्पापिदुर्लभे ॥ केन पापेन ते
जाता गतिरेतादृशी वद ॥ ४५ ॥ किमाहारोसि दुर्वृत्त किमाचारोसि किं तव ॥ पापं वाद्य कथं चैव गतं राक्षस दर्शनात् ॥४६॥ विस्त
राद्ब्रूहि वृत्तांतं स्वीयं पापसमुद्भवम् ॥ येन वा पूयसंक्लिन्नं जातं ते रूपमीदृशम् ॥ ४७ ॥ ब्रह्मराक्षस उवाच ॥ शृणु देव प्रवक्ष्यामि पुरा
वृत्तं मम प्रभो ॥ पुरा भवमहं विप्रो वेदवेदांगपारगः ॥ ४८ ॥ वृद्ध्या जीविकया युक्तो जातो वार्द्धुषिकस्तथा ॥ इदमेव महत्पापं जातं
वै क्रयविक्रयात् ॥ ४९ ॥ स्नातं मया च तीर्थेषु यथाशक्त्या त्वया तथा ॥ पापेनानेन मे सर्वं नष्टं पुण्यं मया कृतम् ॥ ५० ॥ तेन
पापेन मे मृत्युर्जातो वै जलमज्जनात् ॥ ईदृशी च ममावस्था जाता ब्राह्मणसत्तम ॥ ५१ ॥ तदिदानीं महाभाग दर्शनात्ते महात्मनः ॥
पंचाशद्वर्षसाहस्रा गतिर्नष्टा महामते ॥ ५२ ॥ ईश्वर उवाच ॥ इत्युक्त्वा राक्षसं देहं त्यक्त्वा दिव्यवपुः क्षणात् ॥ जातस्त्रिशूलधृक् सोथ
चंद्रार्द्धकृतशेखरः ॥ ५३ ॥ गतः कैलासनिलये पश्यतस्तस्य धीमतः ॥ ब्राह्मणोपि पराश्चर्य्यं दृष्ट्वा तत्परमाद्भुतम् ॥ ५४ ॥ आश्चर्य्यं
परमं लेभे मुखसंन्यस्तस्वांगुलिः ॥ अहो तीर्थस्य महिमा यस्येयं व्युष्टिरुत्तमा ॥ ५५ ॥ चिंतयानस्तदर्थं वै स ययौ भवने स्वके ॥

यत्र रेमे वत्सरपंचकम् ॥ ३९ ॥ उर्व्वंश्या सह वामाक्षि जनयामास वै सुतान् ॥ अत्र यः पंचरात्रं वै स्नाति भक्तिसमन्वितः ॥१४०॥
कंदर्प इव रूपाढ्यो जायते नात्र संशयः ॥ तिस्रः कोट्योर्द्धसंयुक्तास्तीर्थान्यत्राश्रमे प्रिये ॥ ४१ ॥ परं परप्रधानानि रंभोरु शृणु सांप्र
तम् ॥ नानारोगार्त्तदेहोपि स्नानाद्यत्र सुखी भवेत् ॥ ४२ ॥ स्वर्णधाराभिधं तीर्थं देवाद्व्यूतिमात्रतः ॥ तत्र स्नात्वा च विधिवद्दिनत्रय
मुपोष्य च ॥ ४३ ॥ कुबेरं पश्यति क्षिप्रमुपासीत हरिं प्रभुम् ॥ सावधानतया तत्र स्थेयं विष्णुपरात्मना ॥ ४४ ॥ प्रसन्नो धनदो दद्या
त्स्पर्शादिष्टपदं प्रिये ॥ वैखानसं परं तीर्थं महापापनिवारणम् ॥ ४५ ॥ स्नात्वा फलादिभक्षोत्र जयेन्मृत्युं हि वत्सरात् ॥ शेषतीर्थे महा
पुण्ये गंगायां स्नाति यो नरः ॥ ४६ ॥ इहलोके वरान् भोगान् परत्र च परां गतिम् ॥ बदरीनाथदेवस्य वामे तीर्थवरं स्मृतम् ॥४७॥
इंद्रधारेति विख्यातं स्नात्वा चेंद्रसमो भवेत् ॥ वेदधाराभयं तीर्थं सर्ववेदमयं परम् ॥ ४८ ॥ ब्रह्महत्यादिशमनं पितॄणां मुक्तिदायकम् ॥
वसुधाराभिधं तीर्थं सर्वपापप्रणाशनम् ॥४९॥ पापिनां मूर्ध्नि तत्तोयबिन्दवो निपतंति वै ॥ चतुर्वर्गफलप्राप्तिर्जायतेत्र वरानने ॥ १५० ॥
नाम्ना धर्मशिला तत्र स्नात्वाविश्य महामतिः ॥ वसुवर्णजपं कुर्य्याद्वसुलक्षं समाहितः ॥ ५१ ॥ विष्णुसारूप्यतां याति सत्यमेव न सं
शयः ॥ सोमतीर्थमितिख्यातं सर्वतीर्थफलप्रदम् ॥ ५२ ॥ वर्द्धते सह सोमेन ह्रसते तत्तथैव च ॥ पुरा तत्र महाभागे तप्तं सोमेन वै तपः ॥
॥ ५३ ॥ प्रातर्वांश्च महद्रूपं सर्वलोकेषु दुर्लभम् ॥ स्नानाज्जपात्तथा दानादनंतं फलमश्नुते ॥ ५४ ॥ परं सत्यं पदं तीर्थं त्रिषु लोकेषु दुर्ल्ल
भम् ॥ तत्र स्नात्वा महाभागे विष्णुसायुज्यमाप्नुयात् ॥ ५५ ॥ सर्वसिद्धिमवाप्नोति मंडलार्द्धेन भामिनि ॥ चक्रतीर्थे नरः स्नात्वा विष्णु
लोकं व्रजेत्प्रिये ॥ ५६ ॥ चक्रतीर्थस्य माहात्म्यादर्ज्जुनः परमास्त्रवित् ॥ भूत्वा स नाशयामास शत्रून्दुर्योधनादिकान् ॥ ५७ ॥ द्वादशा
दित्यतीर्थे वै सर्वपापप्रणाशनम् ॥ गायते यो बृहत्साम्ना श्रीविष्णुं रविवासरे ॥ ५८ ॥ नीरोगोऽखिलभोगाढ्यो जायते जनवल्लभः ॥
तथा सप्तर्षितीर्थे वै स्नात्वा ब्रह्ममयो भवेत् ॥ ५९ ॥ रुद्रतीर्थे तथा स्नात्वा रुद्रलोके महीयते ॥ ब्रह्मतीर्थं तथा ख्यातं ब्रह्मलोकप्रदाय
कम् ॥ १६० ॥ स्नानं दानं जपो होमस्तत्सर्वं कोटिसंख्यकम् ॥ नरनारायणं तीर्थं नरनारायणावृषी ॥ ६१ ॥ तेपाते परमं देवि तपस्त्रै

लोक्यतापनम् ॥ तन्नाम्ना तु समाख्यातं तीर्थं परमपुण्यदम् ॥ ६२ ॥ यत्र ब्रह्मादयो देवाः परां सिद्धिमवाप्नुयुः ॥ तत्र यत्क्रियते कर्म
तत्सर्वं कोटिसंख्यकम् ॥ ६३ ॥ मुचुकुंदाश्रमे रम्ये देवदानवपूजिते ॥ कुंडं तत्र समाख्यातं मौचुकुंदेति संज्ञितम् ॥ ६४ ॥ यत्र स्नात्वा
सकृदपि न स भूयोभिजायते ॥ व्यासतीर्थं समाख्यातं व्यासदेवेन सेवितम् ॥ ६५ ॥ अवगाह्य तथा दत्वा जप्त्वा ब्रह्म लभेन्नरः ॥ के
शवप्रयागतीर्थं क्षेत्राणां परमं मतम् ॥ ६६ ॥ मणिभद्राश्रमस्तत्र महाविष्णुश्च तत्र वै ॥ पुरा यत्र वरारोहे भीमसेनोजयद्रिपून् ॥ ६७ ॥
गंधर्वाख्यान्महाभागे भद्रे भद्रपुरःसरान् ॥ तत्र पांडवतीर्थं हि पांडवा यत्र संस्थिताः ॥ ६८ ॥ तपश्चक्रुर्महात्मानो धौम्यलोमशसंयुताः ॥
इति सर्वाणि मुख्यानि तीर्थानि कथितानि वै ॥ श्रुत्वापि सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ६९ ॥ इति श्रीस्कान्दे केदारखण्डे
कैलासप्रशंसायां बदरीमाहात्म्ये अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥ ॥ अरुन्धत्युवाच ॥ ॥ भगवन् सर्वधर्मज्ञ ह्युक्तानि बदरीवने ॥ ती
र्थानि कथितान्येव स्वर्गादिफलदानि वै ॥ १ ॥ अतःपरं महाभाग श्रोतुमिच्छामि तत्त्वतः ॥ केनकेनात्र चरितं तीर्थयात्राव्रतं मुने ॥
॥ २ ॥ किं किं फलं परं प्राप्तं माहात्म्यं कस्य कर्म्मणः ॥ एतत्सर्वं समाख्यानं मम विस्तरतो वद ॥ ३ ॥ क्षेत्रस्य परमाख्यानं चतु
र्वर्गफलप्रदम् ॥ शृण्वंत्यास्तस्य माहात्म्यं तृप्तिर्मे जायते नहि ॥ ४ ॥ वसिष्ठ उवाच ॥ साधु पृष्टं त्वया देवि तत्ते सर्वं वदाम्यहम् ॥
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥ ५ ॥ परमं गीतमाहात्म्यं बदरीनाथवेश्मनि ॥ दृष्टं पुरा मया देवि नारदेन यथा पुरा ॥ ६ ॥
आराधितो महात्माभूद्भूतभावन भावनः ॥ गीतेनाष्टकवर्य्येण संतुष्टो भगवान् ददौ ॥ ७ ॥ सर्वज्ञत्वं च देवत्वं नारदाय महात्मने ॥
तत्ते संप्रति वक्ष्यामि सर्वं पापहरं शुभम् ॥ ८ ॥ शृणु सर्वं पुरावृत्तं नारदस्य महात्मनः ॥ दृषद्वत्यां बभूवाथ नाम्ना विष्णुमना द्विजः ॥
॥ ९ ॥ सर्वशास्त्रार्थतत्वज्ञो धर्मात्मा धर्मतत्परः ॥ तस्य पुत्रो विष्णुरतिर्बभूव वरवर्णिनि ॥ १० ॥ पाठ्यमानोपि बहुधा पुत्रं विष्णु
मना बहु ॥ न पपाठ महाभागे विद्यां शास्त्रात्मिकां सदा ॥ ११ ॥ गाने तस्य मनो लग्नं गायनज्ञैश्च संगतः ॥ बहुधा वार्य्यमाणोपि
मन्यते न कदाचन ॥ १२ ॥ पुत्रं निष्कासयामास कोपाविष्टो महीसुरः ॥ सोपि विष्णुरतिर्मूर्खो गायनज्ञैश्च संगतः ॥ १३ ॥ ययौ

देशांतरं देवि भिक्षितुं नृपतींस्तदा ॥ नारायणं दयासिंधुं गायन् साकं वरानने ॥ १४ ॥ प्रसंगात्तस्य वामांगि विष्णुभक्ति रजायत ॥
शब्दो ब्रह्म यतो ह्युक्तं गीताख्यं परमं पदम् ॥ १५ ॥ तस्य घोषात्कुतो देवि न भवेत् ब्रह्मतत्परः ॥ गायते यो विना विष्णुं शिवं च पर
मेश्वरम् ॥ १६ ॥ पापात्मा स हि विज्ञेयो गीतशास्त्रविशारदः ॥ तस्माद्गीयेत्परं ब्रह्म यदवाप्य न शोचति ॥ १७ ॥ गीत्वा यद्वै परं ब्रह्म
शिवोभूद्ब्रह्मतत्परः ॥ गानमेव परं मन्ये यतो विष्णुः प्रसीदति ॥ १८ ॥ ब्रह्मप्रीतिकरं ह्यस्माच्छीघ्रं नान्यविधिः प्रिये ॥ असौ विष्णु
रतिर्मूर्खो विष्णुभक्तोऽभवद्यतः ॥ १९ ॥ सोपि विष्णुरतिः संगं गायकानां तदा त्यजन् ॥ एकाकी प्रययौ धीमान् कैलासे पर्वतोत्तमे ॥
॥ २० ॥ बदरीवनमध्ये तु नारायणसमीपतः ॥ गीयते स्म तदा विष्णुर्भगवान्वै महात्मना ॥ २१ ॥ तदा तुष्टो वरं प्रादाच्छ्रीविष्णु
रतये प्रिये ॥ दुर्लभं योगिनां यद्वै नारदत्वं च संगतः ॥ २२ ॥ अरुंधत्युवाच ॥ कथं गीतो महाविष्णुः केन गीतेन वै प्रभो ॥ तन्मे
शंस महापुण्यं नारदत्वं कथं गतः ॥२३॥ वसिष्ठ उवाच ॥ शृणु चित्तं समाधाय विष्णुभक्तिकरं परम् ॥ यद्गीत्वा च पठित्वा च सर्वपापैः
प्रमुच्यते ॥ २४ ॥ नामामृतं परं दिव्यं श्रीविष्णोः परमात्मनः ॥ सिद्धिदं यत्र कुत्रापि किमु तद्बदरीवने ॥ २५ ॥ गंगायां स महाभागः
स्नात्वा गृह्य जलं परम् ॥ संगायति महा विष्णुं नित्यमेव तपोनिधिः ॥ २६ ॥ " विष्णुरतिरुवाच ॥ रमारमण बदरीपते हरे नृहरे
श्रीपरमेश ॥ भवाब्धितरणचरणेश प्रभो परमविश्वेश ॥ १ ॥ मामव मामव दुरितांबुधौ निमज्जंतम् ॥ धरणिधरण शुभकरण नारायण
सुखनिकेतन ॥ जलधरतनो सुमनोभ्यर्चितचरणतरणेऽव नः ॥ मामव० ॥ २ ॥ मधुमथन मुरक्रथन शुभसदनपरनिधान ॥ गरुडपरा
सन भासन सुर नरकरुणानिधान ॥ मामव० ॥ ३ ॥ जीवजीवन बदरीवनसदन गोपीजनसानंद नरकविदारण दनुजविदारणकर परमा
नंद ॥ मामव० ॥ ४ ॥ राम रावणमथनपर सीतानंदकर सुरनाथ ॥ दुरितनिर्कृंतन जलधिमंथन शुभगाथ ॥ मामव० ॥ ५ ॥ धरणि
धरण शुभकरण नारायण सुखनिकेतन ॥ जयजय हरिततनो भगवन् यदुवंशहरिनाम ॥ मुरसूदन बलवते बलिच्छलन धृतबलिधाम ॥
मामव० ॥ ६ ॥ " भक्त्या परमया गीतं हर्षेण महता प्रिये ॥ प्रत्यक्षं दृष्टवान् विप्रो महाविष्णुं परात्परम् ॥ २७ ॥ शंखचक्र गदापद्म

वनमालाविराजितः ॥ सूर्यकोटिप्रतीकाशो द्योतयन् सर्व तो दिशम् ॥ २८ ॥ उवाच परमं तुष्टो द्विजं भक्तिकरं परम् ॥ वरं वरय भद्रं ते न हि ते दुर्लभं क्वचित् ॥ २९ ॥ विष्णुरातिरुवाच ॥ धन्योस्म्यहं जगन्नाथ परमात्मन् सनातन ॥ न दृष्टं यत्पुरा कैश्चित्तवरूपं गतं मया ॥ ३० ॥ भक्तिर्यथा भवेन्नित्यं त्वयि विष्णौ परेश्वरे ॥ तथा स्यां भगवन् देव गाने तु कुशलो भवेः ॥ ३१ ॥ यत्र कुत्रापि त्वद्भक्तिर्भवतु मम माधव ॥ न पश्यामि भवं विष्णो वराणां मे चतुष्टयम् ॥ ३२ ॥ श्रीभगवानुवाच ॥ याचितं यत्त्वया विप्र सर्वं तत्ते भविष्यति ॥ शिवमाराध्य रागज्ञो भविष्यासि महामुने ॥ ३३ ॥ पुरा त्वं नारदो नाम्ना मम भक्तो मम प्रियः ॥ दक्षशापेन संसारे प्राप्तोसि मुनिवंदित ॥ ३४ ॥ नारं दत्तं त्वया गांगं मह्यं तन्मम रूपकम् ॥ अतस्त्वं नारदो नाम्ना भविष्यासि तपोनिधे ॥ ३५ ॥ इदं नारदकुंडं हि सर्वमुक्तिप्रदायकम् ॥ भविष्यति महाभाग ममापि स्थितिरुत्तमा ॥ ३६ ॥ मूर्त्तयश्चापि पंचाशद्वर्त्तन्ते तावके ह्रदे ॥ युगे युगे ममांशश्च हरांशश्चैव शंकरः ॥ ३७ ॥ उद्धरिष्यति मे मूर्त्तिं तावकीन ह्रदाच्छुभात् ॥ अस्मिन् कुंडे तु यः कश्चित्स्नानं दानं जपादिकम् ॥ करिष्यति महाभाग फलानंत्यं समश्नुते ॥ ३८ ॥ निराहारेण यः कश्चित्प्राणांस्त्यजति बुद्धिमान् ॥ किं तस्य काशीमरणं किंवा योगशतैस्तथा ॥ धन्यः स एव लोकेषु पुण्यात्मा नात्र संशयः ॥ ३९ ॥ वसिष्ठ उवाच ॥ इत्याभाष्य मुनिं विष्णुस्तत्रैवांतरधीयत ॥ सोपि विप्रो महाभागे नारदत्वमुपागतः ॥ ४० ॥ शिवमाराध्य विश्वेशं सर्वं संगीतमाप्तवान् ॥ मूर्त्तिमंतस्तथा रागा भेजिरे नारदं मुनिम् ॥ ४१ ॥

इति श्रीस्कांदे केदारखंडे कैलासप्रशंसायां बदरीमाहात्म्ये नारदोपाख्यानं नाम एकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥छ॥

वसिष्ठ उवाच ॥ ॥ शृण्वरुंधति वक्ष्यामि यात्राया बदरीपतेः ॥ फलमाश्चर्य्यरूपं वै सावधानावधारय ॥ १ ॥ इतिहासं महापुण्यं धनायुष्यप्रवर्द्धनम् ॥ कथयामि महावैश्यो ब्रह्महत्यायुतोपि सः ॥ २ ॥ निःपापः प्राप भवनं वैकुंठाख्यं महास्पदम् ॥ प्रतिष्ठाने पुरे वश्यो बभूव धनतोयाधिः ॥ ३ ॥ नाम्ना शंकरगुप्तो वै धर्मात्मा विष्णुतत्परः ॥ अपुत्रो दुःखितो नूनं नालभच्छर्म कर्हिंचित् ॥ ४ ॥ ॥ ६३
चिन्तयानोऽपि हि भृशं किं धनेन ममेति वै [illegible] ॥ ५ ॥ सर्वं धनं समानीय प्रभासे तीर्थनायके

ब्राह्मणांश्च समाहूय नानादिग्भ्योवरानने ॥ ६ ॥ सर्वान्प्रणम्य विप्रान्वै परिक्रम्य पुनः पुनः ॥ उवाच विनयाविष्टः पुत्रहीनस्य मे
धनम् ॥ ७ ॥ गृह्णीध्वं मुनयः सर्वे गतिर्मे भविता खलु ॥ इति तस्य वचः श्रुत्वा कृपाविष्टा मुनीश्वराः ॥ ८ ॥ ऊचुः शंकरगुप्तं वै
विनयाविष्टमानसम् ॥ भो भो वैश्य महाभाग कुर्मः पुत्रेष्टिकां तव ॥ ९ ॥ येनोपायेन ते पुत्रो भविता विष्णुतत्परः ॥ परं दारुणवे
लायां पृष्टाः स्मो भवता वयम् ॥ १० ॥ तेन ते परमं पापं करिष्यति सुतः किल ॥ पुनर्वै बदरीशस्य यात्रया भविताऽमलः ॥११॥
इत्युक्त्वा ते महाभागे चक्रुरिष्टिं महाविधिम् ॥ चरुमुत्पाद्य तत्रापि ददुस्तस्मै महात्मने ॥ १२ ॥ सोपि वैश्यो महाभागो ददौ बहुतरं
धनम् ॥ तृप्तास्तेपि ययुर्विप्राः स्वं स्वं देशं मुदान्विताः ॥ १३ ॥ शंकरोपि चरुं लब्ध्वा प्रतिष्ठाने पुरे शुभे ॥ प्रियायै प्रददौ तूर्णं गर्भं
प्राप वरांगना ॥ १४ ततस्तु दशमे मासि प्रासूत वरपुत्रकम् ॥ उवाच सा सुतं तं वै ब्रह्मदत्तेति नामतः ॥ १५ ॥ ब्राह्मणैस्तु यतो
दत्तोऽसौ ततो ब्रह्मदत्तकः ॥ ववृधेसोपि वैश्यस्य पुत्रः शुक्ले यथा शशी ॥१६॥ वयोयौवनमापन्नो वैश्यपुत्रो महाद्युतिः ॥ एकदा प्रययौ
सोपि विक्रीतुं द्रव्यकं बहु ॥ १७ ॥ गच्छमानो ददर्शाग्रे म्लेच्छद्वन्द्वं वरानने ॥ तत्र म्लेच्छीं ददर्शासौ रूपयौवनशालिनीम् ॥ १८ ॥
वराननां सुकेशीं च नेत्राभ्यां जितखंजनाम् ॥ दृष्ट्वा मुमोह तां वेश्यां ब्रह्मदत्तो विशः सुतः ॥ १९ ॥ धनं तस्यै ददौ सर्वं तत्संगे
निरतोऽभवत् ॥ तद्धर्म्मनिरतश्चापि बभूव वरवर्णिनि ॥ २० ॥ धनं सर्वं क्षयं नीतं दस्युधर्मरतोऽभवत् ॥ तां गृहीत्वा वने वेश्यामुवास
जनवर्जिते ॥ २१ ॥ एकदा ब्रह्मदत्तोसौ गतश्चौर्याय कानने ॥ एतस्मिन्नंतरे विप्राञ्ज्ञातरूपपरिच्छदान् ॥ २२ ॥ आयातान् दृष्टवाँस्तूर्णं
धनुः सज्जं चकार ह ॥ बाणं संधाय धनुषि ब्राह्मणान्निजघान ह ॥ २३ ॥ यत्किञ्चिद्वसु विप्रेभ्यो मृतेभ्यो मम वल्लभे ॥ जग्राह च पुन
र्दृष्ट्वा विप्रकीर्णजटान्बहून् ॥ २४ ॥ यज्ञोपवीतिनश्चापि मृतान्दृष्ट्वातिदुःखितः ॥ विप्राणां दर्शनादेव किंचित्पापं क्षयं गतम् ॥ २५ ॥
चिंतयामास बहुशो ब्रह्महत्याभिपीडितः ॥ किं मया दुष्कृतं कार्य्यं कृतं पापेन कर्म्मणा ॥ २६ ॥ धनलुब्धेन सुतरां क्व गच्छामि क्व
मे गतिः ॥ ब्राह्मणानां प्रसादेन जातोस्मि पितृप्रार्थितः ॥ २७ ॥ अत्यंतं चिंतयानोऽसौ ययौ यत्र पिता स्थितः ॥ पादयोः पतितस्तस्य

शंकरस्यातिदुःखितः ॥ २८ ॥ मयातिदुष्कृतं तात नीतं सर्वं धनं क्षयम् ॥ चांडाल्या सह संभोगी ब्रह्महत्यासमन्वितः ॥ २९ ॥ कथं
मे भविता तात गतिस्तां वद सांप्रतम् ॥ पापोहं पापकर्माहं मज्जमानो भवार्णवे ॥ ३० ॥ शंकरगुप्त उवाच ॥ एवमेव पुरा तात ब्राह्मणैः
समुदीरितम् ॥ अन्यथा तद्वचः पुत्र भवेदत्र कथं खलु ॥ ३१ ॥ भवितव्यं भवत्येव नात्र कार्य्या विचारणा ॥ जन्मेजयो यथा राजा
धर्मात्मा सत्यसंगरः ॥ ३२ ॥ अष्टादशब्राह्मणानां हत्यां प्राप वने सुत ॥ तथा त्वमपि हत्यां वै प्राप्तवान्देवनिर्मिताम् ॥ ३३ ॥ पुत्र
उवाच ॥ किं कर्त्तव्यं मयेदानीं कथं वै निष्कृतिर्भवेत् ॥ मज्जमानं हि पापाब्धौ रक्ष तात कृपान्वितः ॥ ३४ ॥ शंकरगुप्तउवाच ॥ तैरेव
गदितं पुत्र ब्राह्मणैर्यन्महात्माभिः ॥ तत्ते संप्रति वक्ष्यामि सावधानोवधारय ॥ ३५ ॥ कैलासपर्वत श्रेष्ठे गंधमादनपर्वते ॥ बदरीवनम
ध्ये वै वदरीनायको हरिः ॥ ३६ ॥ दृष्ट्वा यं ब्रह्महत्याभिर्मुच्यते नात्र संशयः ॥ पुत्र त्वमपिगच्छस्व बदरीनाथदर्शने ॥ ३७ ॥ वसिष्ठ
उवाच ॥ इति श्रुत्वा वचस्तस्य शंकरस्य महात्मनः ॥ ययौ गणेशं संपूज्य नमस्कृत्य च ब्राह्मणान् ॥ ३८ ॥ गंगाद्वारे समागत्य नम
स्कृत्य महेश्वरम् ॥ भैरवं चापि संपूज्य फलरक्षणहेतवे ॥ ३९ ॥ केदारेशं च संपूज्य स्नात्वा तत्र यथाविधि ॥ बदरीनाथभवनं नरनारा
यणस्थले ॥ ४० ॥ तत्रत्येषु च तीर्थेषु स्नातः सर्वकृतक्रियः ॥ बदरीनाथभवनं गतवान्विष्णुतत्परः ॥ ४१ ॥ प्रदक्षिणं च कृतवान्
ननाम बहुशो हरिम् ॥ प्रसादं बदरीशस्य भुक्तवाँश्च मुदान्वितः ॥ ४२ ॥ नमस्कृत्य पुनर्गेहमाययौ भक्तितत्परः ॥ सर्वपापविनिर्मुक्तो
बभूव द्विजनंदनः ॥ ४३ ॥ उत्पाद्य बहुशः पुत्रांस्तद्विष्णोः परमं पदम् ॥ ययौ पितृगणैर्युक्तः स्तूयमानः सुरोत्तमैः ॥ ४४ ॥ इति ते
बदरीनाथदर्शनस्य च वैभवम् ॥ पुण्यं पवित्रमाख्यातं किमन्यत् कथयामि ते ॥ ४५ ॥ इति श्रीस्कांदे केदारखण्डे कैलासप्रशंसायां
बदरीमाहात्म्ये वैश्योपाख्यानं नाम षष्टितमोऽध्यायः ॥ ६० ॥ ॥ अरुंधत्युवाच ॥ ॥ अष्टादशब्राह्मणानां हत्यां वै जनमेजयः ॥
प्राप्तवान् धर्मतत्वज्ञो भवितव्यमभूत्कथम् ॥ १ ॥ एतद्विस्तरतो ब्रूहि भगवन् संशयोस्ति मे ॥ निर्मुक्तश्च कथं नाम महतः पाप संच

यात् ॥ २ ॥ वसिष्ठ उवाच ॥ शृण्वरुंधति वृत्तांतं पारीक्षित नृपस्य हि ॥ एकदा नृपतेस्तस्य यज्ञे सर्पभयानके ॥ ३ ॥ पूर्णे चावभृ

थस्थाने भगवान् मुनिनायकः ॥ प्रपौत्रो मम रंभोरु व्यासः सत्यवतीसुतः ॥ ४ ॥ जगाम भवने राज्ञोऽनेकशिष्यैः समावृतः ॥ आगतं
तमृषिं ज्ञात्वा-राजासौ जनमेजयः ॥ ५ ॥ आययौ भक्तिसंपन्नो ह्यानेतुं बादरायणिम् ॥ तं दृष्ट्वा सहसा राजा प्रणिपत्य पुनः पुनः ॥
॥ ६ ॥ करं दक्षं तु संगृह्य मुनिं सर्वविशारदम् ॥ प्रवेशयामास गृहं नानारत्नोपशोभितम् ॥ ७ ॥ पाद्यमाचमनीयं च स्वासनं रत्नभू
षितम् ॥ ददौ तस्मै महाराजोभिमन्योरात्मजात्मजः ॥ ८ ॥ जनमेजय उवाच ॥ धन्योस्म्यनुगृहीतोस्मि यस्य त्वं गृहमागतः ॥ कुशलं
तव शिष्येषु कच्चित्ते तपसि स्थिताः ॥ ९ ॥ अग्निहोत्रेषु वेदेषु आश्रमीयमृगेषु च ॥ किमागमनकृत्यं ते तव किं करवाणि भो ॥ १० ॥
व्यास उवाच ॥ त्वयि राजनि सर्वत्र कुशलं मे नृपेश्वर ॥ धन्योसि त्वं महाबाहो यस्य ते मतिरीदृशी ॥ ११ ॥ कुरूणां पश्चिमो राजा
धर्मिष्ठो जनमेजय ॥ मम पौत्रा महात्मानो युधिष्ठिरमुखा नृपाः ॥ १२ ॥ तेषां प्रपौत्रोस्ति भवान्मोहो मे विगतस्त्वयि ॥ दिष्ट्या त्वं
कृतयज्ञोसि पितुरुद्धारकारकः ॥ १३ ॥ द्रष्टुं त्वां नृप प्राप्तोस्मि धन्यः कुरुकुलोद्वह ॥ इदं सर्वं तु यज्जातं कुरूणां कुलनाशनम् ॥१४॥
भाव्यमेवेति संजातमहं प्रत्यक्षदर्शिवान् ॥ दिष्ट्या त्वमपि धर्मात्मा कुरूणां वंशवर्द्धनः ॥ १५ ॥ जनमेजय उवाच ॥ भवता जानता
भाव्यं यतः प्रत्यक्षदर्शिवान् ॥ उक्तं तेभ्यः कथं ब्रह्मन् भवितव्यं नहि त्वया ॥ १६ ॥ उक्तं चापि त्वया सर्वं किमर्थं संगरः कृतः ॥ वैरं
नाभूत्कारणीयं पूर्वमेव पितामहैः ॥ १७ ॥ एतन्मे संशयं छिंधि सर्वज्ञो नास्ति त्वत्समः ॥ धर्मात्मनां महाभाग नैवं भवितुमर्हति ॥
॥ १८ ॥ वसिष्ठ उवाच ॥ विहस्य भगवान्व्यासो राजानं जनमेजयम् ॥ उवाच भक्तिसंपन्नं विस्मयाविष्टमानसम् ॥ १९ ॥ श्रीवेद
व्यास उवाच ॥ भवितव्यं भवत्येव विज्ञानामपि पार्थिव ॥ निमित्तमात्रं भवति कर्त्ता हर्त्ता न संशयः ॥ २० ॥ इंद्रोपि राज्याद्रि भ्रष्टो
नहुषः स्वर्चितस्तथा ॥ रामो दाशरथिर्वीरः सर्वात्मा दृढ विक्रमः ॥ २१ ॥ प्राप्तवान् सोपि दुःखं हि नलश्चापि महीपतिः जानन्निरैतै
र्नृपते न कृतं दूरतस्तथा ॥ २२ ॥ भवितव्यं महाराज न व्यर्थं भवति क्वचित् ॥ एतत्सर्वं मयाख्यातं पृष्टं यद्भवता नृप ॥ २३ ॥ जनमे
जय उवाच ॥ भगवन् सर्वधर्मज्ञ व्यास सत्यवती सुत ॥ वदान्यदपि यद्भाव्यं न कुर्य्यामहमप्यथ ॥ २४ ॥ किं मेग्रे भविता ब्रह्मन् राज्ये

मत्पालिते प्रभो ॥ भवेद्यावन्महाभाग भवितव्यं न वै मुने ॥२५॥ वसिष्ठ उवाच ॥ इति तद्भाषितं श्रुत्वा व्यासः सत्यवतीसुतः ॥ जानन्नहास
वचनं प्रोचे च भावितव्यताम् ॥२६॥ व्यास उवाच ॥ शृणु राजन्महाबाहो भवितव्यं यथा तव ॥ अचिरेणैव कालेन ब्रह्महत्या भविष्यति ॥
॥२७॥ जनमेजय उवाच ॥ कथं मे भविता ब्रह्मन्ब्रह्महत्या गरीयसी ॥ किमर्थं ब्राह्मणं हन्यां जगत्पूज्यं मुनीश्वर ॥२८॥ केन वै कारणे नापि
ब्रह्महत्या भविष्यति ॥ न कुर्यां कारणं पूर्वं येन पापं भविष्यति ॥ २९ ॥ व्यास उवाच ॥ भविष्यत्येव यद्भाव्यं परं शृणु महीपते ॥
अतस्तु षोडशे घस्रे विक्रेता जनमेजय ॥ ३० ॥ हयानां सिंधुजानां हि नाम्नो वै क्षेमकर्णकः ॥ एको वै भविता तत्र तुरगो ह्यतिवेग
वान् ॥ ३१ ॥ आरोक्ष्यासि त्वं तुरगं वेगवंतं महीपते ॥ स नेष्यति तदा त्वां हि विपिने निर्जने त्वरन् ॥ ३२ ॥ तत्र द्रष्टासि नृपते नारीं
परमसुंदरीम् ॥ तां दृष्ट्वा त्वं महाराज कामस्य वशमागतः ॥ ३३ ॥ मोहितश्चापि भविता दृष्ट्वा तां रतिरूपिणीम् ॥ तां गृहीतुं मनो
राजन् भविष्यति तदा तव ॥ ३४ ॥ सा वदिष्यति हे राजन् एते ब्राह्मणपुंगवाः ॥ भर्त्तारो मम संतीति तान्मारय महीपते ॥ ३५ ॥
निर्भयं ते भविष्यामि भार्या परम सुंदर ॥ पाणिं गृहाण मे शीघ्रं गृहीतुं यदि चेच्छसि ॥ ३६ ॥ तस्मिन्नेव हि काले त्वं भविष्यसि
विमोहितः ॥ मारयिष्यसि तान्विप्रान्वेदवेदांगपारगान् ॥ ३७ ॥ सापि नारी तु तत्सर्वं कृत्वांतर्द्धानमेष्यति ॥ इति ते कथितं राजन्
यद्भविष्यति तेग्रतः ॥३८॥ स्वस्ति तेस्तु गमिष्यामि कैलासे पर्वतोत्तमे ॥ गंधमादनशृंगे तु श्रीमद्बदरिकाश्रमे ॥३९॥ वसिष्ठ उवाच ॥
इत्युक्त्वा वचनं देवि पाराशर्यो महामुनिः ॥ शिष्यैः परिवृतो विप्रैर्बदर्य्याश्रममंडले ॥ ४० ॥ षष्टिलक्षं भारतं च निर्ममे ज्ञानिनां वरः ॥
अद्याऽपि तत्प्रदेशे हि वर्त्तते व्यासपुस्तकम् ॥ ४१ ॥ यो वै पंचाह्निकं तत्र सोपवासो जितेंद्रियः ॥ व्यासं सत्यवती पुत्रं वरदं स हि
पश्यति ॥ ४२ ॥ सोपि राजा महाबाहुः संत्रस्तो जनमेजयः ॥ स्मरन्व्यासस्य वचनं सावधानोऽभवत्तदा ॥ ४३ ॥ नाचचक्षे स कस्मै
चिद्गुह्यं परमकं प्रिये ॥ ततस्तु षोडशे घस्रे प्रातरेव कृतक्रियः ॥ ४४ ॥ मंत्रिणश्च सुभृत्यांश्च प्रोवाच जनमेजयः ॥ अद्य मां यः प्रभाषेत
स मे वध्यो भविष्यति ॥ ४५ ॥ इत्याभाष्य नृपस्तूर्णं शुद्धांतं प्रविवेश ह ॥ मुद्रयित्वा कपाटादी नेकाकी जनमेजयः ॥४६॥ सुप्वाप

च महाभागे पर्य्यंके शयने शुभे ॥ ततोपराह्णसमये ह्यागतः क्षेमकर्णकः ॥ ४७ ॥ विक्रेतुं तुरगान्देवि बहून्वै वातरंहसः ॥ दृष्ट्वा नाग
रिकास्तान्वै सिंधुसौवीरदेशजान् ॥४८॥ आरोढुं चैव शक्ता नो बभूवुः केऽपि सुन्दरि ॥ आययुर्नृपतेर्द्वारि कौतूहलयुता जनाः ॥४९॥
तत्रैकोऽसित रूपोऽश्वो वातरंहाः सुलक्षणः ॥ तं दृष्ट्वा विस्मिताः सर्वे हयं परमरंहसम् ॥ ५० ॥ कोलाहलं परं चक्रुर्दृष्ट्वा तत्पतिताञ्ज
नान् ॥ एतस्मिन्नंतरे राजा भाविकर्मविमोहितः ॥ ५१ ॥ गवाक्षजालसंछन्नो ददर्श कौतुकं महत् ॥ ददर्श च तदा राजा चपलं तुरगं
प्रिये ॥ ५२ ॥ सर्वलक्षणसंपन्नं दुष्टचिह्नविवर्ज्जितम् ॥ चिंतयामास राजापि ह्यागतस्तुरगोप्ययम् ॥ ५३ ॥ उद्घाट्य तद्गवाक्षं वै स्थित
वान् कौतुकान्वितः ॥ यद्यारोक्ष्यामि तुरगं गमिष्यामि न वै वनम् ॥ ५४ ॥ यतोस्वतंत्रास्तुरगा इत्येवं चिंतयन्नृपः ॥ अवाततार स्वर्गे
हात्क्षीणपुण्यो यथा नरः ॥ ५५ ॥ आरुरोह हयं तूर्णं दर्शयन्हयलाघवम् ॥ मोहितो भवितव्येन चकार नृपतिर्जवम् ॥ ५६ ॥ रेखेव
वाजिनां यद्वद्वाजिनश्च जवक्रमे ॥ रेजे सव्यापसव्येन द्विमुखो हयसत्तमः ॥ ५७ ॥ वलये वलयाकारस्तदद्भुतमिवाभवत् ॥ इति वै
लालयन्नश्वं चकार हयलाघवम् ॥ ५८ ॥ अथो राजा महाबाहुर्भाविकर्मविमोहितः ॥ जवक्रमं चकाराशु कर्मणा वै विकर्षितः ॥ ५९ ॥
निन्ये तत्र महाराजं तुरगो ह्यतिवेगवान् ॥ वने मृगगणाक्रांते झिल्लीझंकारनादिते ॥ ६० ॥ एतस्मिन्नंतरे काले ददर्श स्त्रियमेकलाम् ॥
श्यामां सुनेत्रां चार्वंगीं कामस्येव रतिं यथा ॥ ६१ ॥ दृष्ट्वा तां मोहमापन्नो जगाद वचनं नृपः ॥ का त्वं कस्य किमर्थं वै वनेस्मिन्निर्जने
शुभे ॥ ६२ ॥ त्वदधीनोस्म्यहं भद्रे शाधि मां कामपीडितम् ॥ इति तस्य वचः श्रुत्वा बभाषे वचनं ततः ॥ ६३ ॥ स्त्र्युवाच ॥ भो भो
राजन्महाबाहो शृणु मे वचनं शुभम् ॥ एते ह्यष्टादश प्रोक्ता ब्राह्मणाश्च जितेंद्रियाः ॥ ६४ ॥ वृद्धाः परं महाभाग भृशमुद्विग्नमानसाः ॥
नित्यं वसामि दुःखेन यौवनोन्मादशालिनी ॥ ६५ ॥ भवादृशं महाराज शरणागतपालकम् ॥ अन्वेषयामि सर्वत्र को मे दुःखं हरेत्प्रभो
॥ ६६ ॥ महाराज महाभाग भाग्येन मिलितो ह्यसि ॥ एते वृद्धतराः क्रूरा नित्यं वै विजितेंद्रियाः ॥ ६७ ॥ सवेपमानहृदया दृष्ट्वा ताञ्छ्म
श्रुलांस्तथा ॥ तपस्विनः कर्कशांगान् कृशान्वै कर्कशद्युतीन् ॥ ६८ ॥ वसिष्ठ उवाच ॥ इति तद्वचनं श्रुत्वा देवितं बहुधा तु तत् ॥

करुणा पूर्णहृदयो बभाषे वचनं पुनः ॥ ६९ ॥ राजोवाच ॥ किं करोमि महाभागे येन त्वं सुखिता भवेः ॥ कथमेते त्यजिष्यंति ब्राह्म
णाः शंसितव्रताः ॥ ७० ॥ रुच्युवाच ॥ भो भो राजन्महाभाग दया ते हृदि यद्भवेत् ॥ एतान्मारय शीघ्रं त्वं मत्पाणिग्रहणं कुरु ॥७१॥
राजोवाच ॥ कथं हन्यां महाभागे ब्राह्मणान्वेदपारगान् ॥ एतन्मे शंस सुभगे कथं ते सुप्रियं भवेत् ॥ ७२ ॥ रुच्युवाच ॥ देह एव परा
त्मा वै स्वस्य वै जनमेजय ॥ अयं सुखी यथा भूयात्कर्त्तव्यं तत्तथैव हि ॥ ७३ ॥ राजोवाच ॥ तव चेत्सुप्रियं सुभ्रु जायतेऽनेन कर्म्म
णा ॥ त्वदर्थं वै करिष्यामि वधमेषां दुरात्मनाम् ॥ ७४ ॥ वसिष्ठ उवाच ॥ इत्युक्ता तां तथा राजा भाविकर्मप्रचोदितः ॥ विस्मृतं तच्च
व्यासोक्तं कामस्य वशमागतः ॥ ७५ ॥ निजघान तदा विप्रान् खड्गेनैकेन सत्वरम् ॥ कामः प्रिये महाञ्छत्रुः सर्वेषां हृदि संस्थितः ॥
॥ ७६ ॥ यस्यावेशान्नरः सर्वं करोति हि वरानने ॥ प्रियान्पुत्रांस्तथा भर्तॄन्भ्रातॄन् ब्राह्मणसत्तमान् ॥ ७७ ॥ तृणवन्मनुते कामी तस्मा
त्क्षेमेप्सुरुत्सृजेत् ॥ मारयित्वा तदा राजा ब्राह्मणान्वेदपारगान् ॥ ७८ ॥ आययौ तत्र सुभगे यत्र सा मिलिताह्यभूत् ॥ न ददर्श ततस्तां
वै विस्मितश्चाभवन्नृपः ॥ ७९ ॥ चिंतयामास बहुशो राजासौ जनमेजयः ॥ त्यक्त्वा गृहादिकं सर्वं ययौ बदरिकाश्रमे ॥ ८० ॥ तत्र गत्वा
महाभागे चक्रे प्रायोपवेशनम् ॥ व्यासपुस्तकपार्श्वे तु पंचरात्रं महीप्रभुः ॥ ८१ ॥ निराहारो निरानंदो मरणे कृतनिश्चयः ॥ व्यासं ददर्श
नृपतिर्जटामंडलधारिणम् ॥ ८२ ॥ दंडवत्प्रणिपत्यासौ परिक्रम्य पुनः पुनः ॥ उवाच वचनं त्रस्तो रक्ष रक्षेति चासकृत् ॥ ८३ ॥
उवाच वचनं व्यासो माभैर्माभैर्महीपते ॥ भवितव्यं भवत्येव मयोक्तं पूर्वमेव हि ॥ साम्प्रतं शृणु राजेन्द्र भारतं कल्मषापहम् ॥ ८४ ॥
वसिष्ठ उवाच ॥ शुश्राव भारतं सर्वं व्यासस्य वदनात्ततः ॥ निष्कल्मषो बभूवाथ श्रवणाद्भारतस्य हि ॥८५॥ इति ते कथितं सुभ्रु
भवितव्यस्य वैभवम् ॥ जनमेजयस्य च यथा ब्रह्महत्या बभूव ह ॥ ८६ ॥ बदर्य्याश्रममाहात्म्यात्तथा भारतसंश्रवात् ॥ राजासौ कल्म
षैर्हीनो बभूव वरवर्णिनि ॥ ८७ ॥ इदं यशस्यमायुष्यं ब्रह्महत्यानिवारणम् ॥ कथितं ते महाभागे किमन्यत्कथयामि ते ॥ ८८ ॥ इति
श्रीस्कांदे केदारखंडे कैलासप्रशंसायां बदरीमाहात्म्ये जनमेजयोपाख्यानं नाम एकषष्टितमोऽध्यायः ॥ ६१ ॥

॥ अरुन्धत्युवाच ॥ ॥ कथय त्वं महाभाग मरणस्य च वैभवम् ॥ कुत्र तेषां गतिर्देव पतितं तत्र कीकसम् ॥ १ ॥ बदरीनाथभवने
क्षेत्रे क्षेत्रोत्तमे प्रभो ॥ एतन्मे शंस भगवन् श्रोतुकामास्मि हे मुने ॥ २ ॥ केन वै विधिना कुर्य्याद्यात्रां तु बदरीपतेः ॥ पुण्यं पवित्रमा
ख्यानं शृण्वंत्या भक्तिरुत्तमा ॥ ३ ॥ वसिष्ठ उवाच ॥ शृणु प्रिये प्रवक्ष्यामि माहात्म्यं बदरीपतेः ॥ तीर्थश्रवणमाहात्म्ये धन्या ते बुद्धि
रीदृशी ॥ ४ ॥ अत्रेतिहासं वक्ष्यामि सावधानावधारय ॥ अवंतीनगरे पूर्वं बभूवामितधार्मिकः ॥ ५ ॥ चंद्रगुप्त इति ख्यातो धनधान्य
निधिः प्रिये ॥ वाणिज्येन कृताजीवो दशपुत्रोमितप्रभः ॥ ६ ॥ संपत्तिर्बृहती तस्य गजाश्वादिमयी तथा ॥ दन्तिनाञ्च हयानाञ्च विक्रेता
स वरानने ॥ ७ ॥ एकदा तस्य भवने धर्मदत्तो महीसुरः ॥ बदर्य्याश्रमवासी वै आययौ भिक्षुतुं विशम् ॥ ८ ॥ तस्य वै दर्शनाद्वैश्यो
बभूव मलवर्जितः ॥ पप्रच्छ तं धर्मदत्तं चंद्रगुप्तो महामतिः ॥ ९ ॥ कुतः समागतं विप्र कुत्रत्योसि महामते ॥ मां किमाज्ञापयसि भो
किं करोमि तव प्रियम् ॥ १० ॥ ब्राह्मणउवाच ॥ अहं कैलासपार्श्वे वै बदरीवनमंडिते ॥ देशे वसामि नित्यं वै कण्वगोत्रसमुद्भवः ॥
॥ ११ ॥ भिक्षितुं त्वां समायातो बहुपुत्रकलत्रकः ॥ धनं मे नास्ति भवने ततस्त्वां समुपागतः ॥ १२ ॥ चंद्रगुप्तउवाच ॥ कुत्र वै तन्म
हाक्षेत्रं बदरीवनसंज्ञितम् ॥ को देवः पूज्यते तत्र लभ्यते किं फलं नरैः ॥ १३ ॥ प्राप्यते ब्राह्मणश्रेष्ठ श्रोतुमिच्छामि तत्त्वतः ॥ यद्वदि
ष्यसि तत्सर्वमहं कर्त्तास्मि सुव्रत ॥ १४ ॥ ब्राह्मण उवाच ॥ गंगाद्वारात्पूर्वभागे त्रिंशद्योजनसंमिते ॥ वर्त्तते तन्महाक्षेत्रं भुक्तिमुक्तिप्रदाय
कम् ॥ १५ ॥ यत्र देवाः सगंधर्वा मुनयः शंसितव्रताः ॥ तपस्यन्ति महात्मानः संसारपरिमुक्तये ॥ १६ ॥ अनंतानि च तीर्थानि पाप
नाशकराणि वै ॥ गंगा तत्र महाभाग त्रैलोक्यपाविनी परा ॥ १७ ॥ बदरीनाथभवनं प्रणमेद्यो महामतिः ॥ स वै विष्णुपुरं याति पूज्य
मानो मुनीश्वरैः ॥ १८ ॥ सकृद्येनापि भवनं दृष्टं वै बदरीपतेः ॥ न स संसारमार्गस्य पांथो जायेत कर्हिचित् ॥ १९ ॥ बदरीनाथनैवेद्यं
भुक्तं यैर्भक्तितत्परैः ॥ अभोज्याशनदोषश्च मुच्यते नात्र संशयः ॥ २० ॥ तस्यैव जन्म सफलं यो गतो बदरीपतिम् ॥ तस्य संसारजल
धिर्महान्वै गोष्पदायते ॥ २१ ॥ इति ते कथितं वैश्य त्वया पृष्टोस्मि यद्यथा ॥ धन्योसि तीर्थयात्रायां यस्य बुद्धिर्महामते ॥ २२ ॥

चंद्रगुप्तउवाच ॥ केन वै विधिना ब्रह्मन् कुर्य्याद्यात्रां रमापतेः ॥ किं भोज्यं वै किमाचारो गमने बदरीपतेः ॥ २३ ॥ एतत्सर्वं महाभाग
कृपया परया युतः ॥ वद मे भक्तितस्त्वां वै पृच्छेयं ब्रह्मपारगम् ॥ २४ ॥ ब्राह्मण उवाच ॥ शृणु धर्मज्ञ वक्ष्यामि प्रसंगाद्यन्मया श्रुतम् ॥
पृच्छते सत्यधर्माय नारदोक्तं महा मते ॥ २५ ॥ सत्यधर्मो महाराजः पप्रच्छ नारदं क्वचित् ॥ यदुक्तं तेन महता तत्सर्वं शृणु सुव्रत ॥
॥ २६ ॥ कर्त्तव्या बदरीयात्रा भीतेन भवबंधनात् ॥ संपूज्य गणपं पूर्वं स्वस्तिवाचन पूर्वकम् ॥ २७ ॥ पुण्याहं वाचयेत्तत्र बदरीनाथ
मानसः ॥ ततः संप्रार्थयेद्विप्रान्पूजितान्वसनादिभिः ॥ २८ ॥ आज्ञापयध्वं भूदेवा मां वः शरणमागतम् ॥ भवतां कृपया देवाः कृतयात्रो
यथा पुनः ॥ २९ ॥ आगच्छेयं सुखं गेहे लभेयं धर्ममुत्तमम् ॥ भवंतो ब्राह्मणाः पूर्वं निर्मिता धर्मदर्शकाः ॥ ३० ॥ सर्वे यज्ञास्तथा दे
वास्तीर्थानि विविधानि च ॥ भवच्चरणगेहानि ततो वो भक्ति तो नमः ॥ ३१ ॥ इति संप्रार्थ्यविप्रांस्तु कृतकर्पटिवेषकः ॥ जितेन्द्रियः
शुद्धमना भूमिशायी महामतिः ॥ ३२ ॥ संध्यात्रय मुपासीत एकस्थाने फलाशनः ॥ पद्भ्यां गच्छेन्न यानेन यदीच्छेद्धर्ममुत्तमम् ॥
॥ ३३ ॥ गोयाने गोवधःप्रोक्तो वैफल्यं हययानतः ॥ अर्द्धं फलं नरारोहे तस्माद्यानं विवर्ज्जयेत् ॥ ३४ ॥ अन्नं परस्य नो भुंजेद्यतो नि
ष्फलता स्मृता ॥ यद्यत्कर्म महाभाग क्रियते वै यदन्नकैः ॥ ३५ ॥ स तस्य किल्बिषं भुंक्ते अन्नदातुश्च तत्फलम् ॥ तस्मात्सर्वप्रयत्नेन
परान्नं वर्जयेत्सुधीः ॥ ३६ ॥ अध्यात्मचिंतनं कुर्वन् शृण्वन्वै तीर्थवैभवम् ॥ गच्छेन्नारायणस्थानं सर्वदेवैरनुष्ठितम् ॥ ३७ ॥ गंगाद्वारे
समागत्य ह्यर्चयेन्नीलभैरवम् ॥ ततः संप्रार्थयेन्नम्रो गंगायां कृतसत्क्रियः ॥ ३८ ॥ नमो नमस्ते भगवन्नीलभैरव क्षेत्रप ॥ अनुज्ञां देहि
यात्रायै धन्यः स्यां त्रिजगत्सु वै ॥ ३९ ॥ ततः कण्वाश्रमे गत्वा बदरीनाथक्षेत्रके ॥ तत्रत्येषु च सर्वेषु स्नात्वा चैव यथाविधि ॥ ४० ॥
ततः केदारभवनं गच्छेत्पापापनुत्तये ॥ केदारनाथं संपूज्य गृहीत्वाऽऽज्ञां ततः सुधीः ॥ ४१ ॥ कार्य्यं बदरिकेशस्य दर्शनं शुभदायकम् ॥
अकृत्वा दर्शनं वैश्य केदारस्याघनाशिनः ॥ ४२ ॥ यो गच्छेद्बदरीं तस्य यात्रा निष्फलतां व्रजेत् ॥ तस्मात्सर्वं प्रयत्नेन पूर्वं केदारदर्श ॥ ६७ ॥
नम् ॥ ४३ ॥ कार्य्यं पुण्येप्सुना श्रेष्ठिन्न भेदः शिवकृष्णयोः ॥ क्षेत्रे सूक्ष्मे ततो गत्वा [illegible] नरः ॥ ४४ ॥ क्षेत्रोपवासं कुर्य्याद्वै

दिनमेकं जितेंद्रियः ॥ प्रातः स्नात्वा तु गंगायां नारदीयह्रदादिषु ॥ ४५ ॥ वह्नितीर्थे ततः स्नायान्नियतो यतमानसः ॥ वदरीनाथभवनं
गच्छेद्वै हरिमानसः ॥ ४६ ॥ उपायनं यथा शक्त्या भक्त्या हि मनुजोऽर्पयेत् ॥ आकिरीटांघ्रिपर्य्यंतं पश्येन्नारायणं विभुम् ॥ ४७ ॥
यथाशक्त्या ब्राह्मणेभ्यो दद्यादत्र महामनाः ॥ प्रदक्षिणां ततः कुर्य्याद्भक्त्या वै परया युतः ॥ ४८ ॥ ततस्तीर्थेषु चागत्य दद्याद्दानानि
शक्तितः ॥ गोचर्ममात्रा पृथिवी येन दत्ता कुटुंबिने ॥ तेन सर्वा मही दत्ता ब्रह्मणे वेदवादिने ॥ ४९ ॥ त्रुटिमात्रं हिरण्यं वै दत्तं वेदविदे
पुनः ॥ सुवर्णस्य तुलादानाद्यत्तत्फलमवाप्नुयात् ॥ ५० ॥ देवालये महाविष्णोर्गंगाया रोधसि प्रभो ॥ दीपा देयाश्चंद्रगुप्त संसारपरिमु
क्तये ॥ ५१ ॥ दीपदश्चक्षुराप्नोति स्वर्णदो वपुरुत्तमम् ॥ अन्नदस्तृप्तिमाप्नोति धातुदो भाग्यमुत्तमम् ॥ ५२ ॥ गोप्रदाता महाभाग संसारे
न स जायते ॥ हयदो गजदश्चैव यानं प्राप्नोति सत्तमम् ॥ ५३ ॥ यदत्र क्रियते कर्म कोटिकोटिगुणं भवेत् ॥ तस्मात्सर्वप्रयत्नेन पापं
नैवात्र कारयेत् ॥ ५४ ॥ अन्यान्यपि च तीर्थानि गच्छेद्वै भक्तितत्परः ॥ स्नायाद्यथोक्तविधिना दानं दद्याच्च भक्तितः ॥ ५५ ॥ प्रसादं
हरिनैवेद्यं भुंजीयाद्भक्तितत्परः ॥ ततः स्वगृहमागच्छेद्ब्राह्मणान् भोजयेत्ततः ॥ ५६ ॥ एवं यः कुरुते यात्रां न स भूयोऽभिजायते ॥ अश्व
मेधादियज्ञानां पादे पादे फलं लभेत् ॥ ५७ ॥ धन्यः स्यात्त्रिषु लोकेषु सुरैरपि स पूज्यते ॥ तस्मात्त्वमपि धर्मज्ञ गच्छ श्रीबदरी
वनम् ॥ ५८ ॥ सर्वपापैर्विनिर्मुक्तो जन्मजन्मार्जितैरपि ॥ मुक्तो भविष्यसि तदा सत्यं सत्यं न संशयः ॥ ५९ ॥ एतत्सर्वं महाभाग
यत्पृष्टं कथितं तव ॥ ६० ॥ वसिष्ठ उवाच ॥ इति श्रुत्वा वचस्तस्य ब्राह्मणस्य महात्मनः ॥ यात्रामेव परां मेने बदरीनायकस्य सः ॥
॥ ६१ ॥ पुत्रैः परिवृतः सर्वैर्बंधुभिश्च सदारकैः ॥ यथोक्तविधिना चक्रे गमनादिविधिं प्रिये ॥ ६२ ॥ यथोक्तं तेन विप्रेण माहात्म्यं
बदरीपतेः ॥ चकार तत्तथैवासौ चंद्रगुप्तो महामतिः ॥ ६३ ॥ एका तस्य वधू रम्या गजदंतविभूषणा ॥ तस्याः करात्पपातापि गजदं
तविभूषणम् ॥ ६४ ॥ शिलानां पंचके देवि स्नातायां प्रियवादिनि ॥ एतस्मिन्नेव काले तु चंद्रगुप्तादयस्तथा ॥ ६५ ॥ स्तूयमानं मु
निगणैर्ददृशुःखे महौजसम् ॥ विमानस्थं शंखचक्रगदापद्मविराजितम् ॥ ६६ ॥ पुरुषं पुरुषैर्देवि नीयमानं तु वैष्णवैः ॥ तद्दृष्ट्वा महदा

श्चर्य्यं किमेतदिति चिंतयन् ॥ ६७ ॥ शुश्राव वाणीं मधुरां वैश्य वैश्येति चासकृत् ॥ धन्योहं कृतकृत्योहं जातोहं त्वत्प्रसादतः ॥६८॥
गजो वै गुरुदंतोहं वैकुंठे गमनं मम ॥ इति तद्वचनं श्रुत्वा गोष्ठी परमविस्मिता ॥ ६९ ॥ जगाद वचनं तं च चंद्रगुप्तो वरानने ॥ केन
वै कर्मणा हस्तिन् गतोऽसि परमां गतिम् ॥ ७० ॥ उक्तं त्वया पराश्चर्य्यं मया ते किं कृतं गज ॥ गजउवाच ॥ मम दंतकृताभूषा वधू
रम्या महामते ॥ ७१ ॥ तवेयं ह्यागता तीर्थे श्रीमद्बदरिकाश्रमे ॥ त्रुटितं पतितं ह्यत्र भूषणं तत्कराद्विभो ॥ ७२ ॥ तेन पुण्यप्रभावेन
निष्पापो ह्यभवं तदा ॥ तिर्य्यग्योनिगतोहं च कुतो वैकुंठमंदिरम् ॥ तव प्रसादात्प्राप्ता हि मया विष्णुसलोकता ॥७३॥ वसिष्ठ उवाच ॥
इति तं कथयित्वासौ स्तूयमानो मुनीश्वरैः ॥ गतो वैकुंठभवने संभाष्य च पुनः पुनः ॥७४॥ इति तत्परमाश्चर्य्यं दृष्ट्वा श्रेष्ठी महामनाः ॥
सर्वेभ्योप्यधिकं मेने ह्यात्मानं कृतदर्शनम् ॥ ७५ ॥ सोपि तत्रैव निवसन् प्राणांस्तत्याज सुप्रियान् ॥ परमं लयमापन्नो जन्मनाशादि
वर्जितम् ॥ ७६ ॥ बभूवुस्तेपि तन्वंगि दाराः पुत्रास्तथापरे ॥ गृहे भुक्त्वा वरान् भोगानंते ते वैष्णवं ययुः ॥ ७७ ॥ इति ते कथितं
सर्वं यच्च पृष्टं त्वया प्रिये ॥ पुण्यं यशस्यमायुष्यं पुत्रीयं धनधान्यदम् ॥ ७८ ॥ माहात्म्यं बदरीशस्य सर्वं पापविमोचनम् ॥ श्रुत्वा
प्येतन्महाभागे विष्णुसायुज्यमाप्नुयात् ॥ ७९ ॥ सर्वे मनोरथास्तस्य पूर्णाः स्युर्नात्र संशयः ॥ माहात्म्यमेतद्यद्गेहे लिखितं वर्त्तते प्रिये ॥
॥ ८० ॥ आधिव्याधिभयं नैव घोरराजाग्निजं भयम् ॥ श्रीविष्णोर्नित्यसान्निध्यं यद्गेहे पुस्तकं त्विदम् ॥८१॥ दुःस्वप्नो नश्यते शीघ्रं
रोगी मुच्येत वै गदात् ॥ श्रुत्वा बदरिमाहात्म्यं वाचकाय ददेद्धनम् ॥ ८२ ॥ एतत्सर्वं महाभागे नियमेन मम प्रिये ॥ महात्म्यमेत
च्छृणुयात्सर्वान्कामानवाप्नुयात् ॥८३॥ इति श्रीस्कांदे केदारखण्डे कैलासप्रशंसायां श्रीबदरीमाहात्म्यं नाम द्विषष्टितमोऽध्यायः ॥६२॥
॥ अरुन्धत्युवाच ॥ ॥ मुनीश्वर महाभाग ह्यन्यत्पृच्छामि विस्तरात् ॥ महादेवात्कथं रागान्प्राप्तवान्नारदो मुनिः ॥१॥ के के रागाः
समाख्याता उत्पन्नाश्च कथं प्रभो ॥ कस्मिन्क्षेत्रे स्तुतस्तेन शिवश्च शिवदायकः ॥ २ ॥ एतत्सर्वं महाभाग प्रियायै वद विस्तरात् ॥
कथं रागसमुद्भूतिः परं कौतूहलं हि मे ॥ ३ ॥ वसिष्ठउवाच ॥ शृणु प्रिये प्रवक्ष्यामि यथा वै नारदः पुरा ॥ श्रीगंगापुलिने देवि नार

दस्तप आचरत् ॥ ४ ॥ रुद्रप्रयागे तन्वांगि सर्वतीर्थोत्तमे शुभे ॥ यत्रनागाश्चशेषाद्यास्तपश्चक्रुर्महात्मनः ॥ ५ ॥ प्रापुर्विभूषणत्वंते म
मादेवस्यसुन्दरि ॥ अद्यापि तत्ररंभोरुनागानामालयाः शुभाः ॥ ६ ॥ तत्रा सौ नारदो गत्वा स्मरन्वैमनसाशिवम् ॥ तपश्चचार परमं
रुद्रतीर्थं महातपाः ॥ ७ ॥ ग्रीष्मे पंचाग्निसन्तप्तो वर्षाधारासहस्तथा ॥ हेमंते हिमवातादिसहो जातो महातपाः ॥ ८ ॥ निराहारो वर्षं
शतमेकपादेन तस्थिवान् ॥ शिवध्यानपरो देवि तथा षड्वर्णतत्परः ॥ ९ ॥ तारः पूर्वं शिवायेति तारांते नम उच्यते ॥ जपन्नेवं महा
भागे मात्रास्पर्शैरसंयुतः ॥ १० ॥ नारदस्य तपो दृष्ट्वा सर्वभूतानि तत्रसुः ॥ न स्थातुं शक्नुवंतो वै तस्याग्रे देवदानवाः ॥ ११ ॥ इति
संतपतस्तस्य प्रसन्नो भगवान् शिवः ॥ प्रमथैः सेव्यमानश्च पार्वत्या सहितः प्रभुः ॥१२॥ कैलासगौरे नंद्याख्ये वृषभे महति स्थितः ॥
व्यालैः सहस्रशो भूषी नीलकंठो महाहनुः ॥ १३ ॥ त्रिनेत्रो भूतपः सिद्धैः सेव्यमानः सुरासुरैः ॥ करिचर्मा सिंहचर्मा कोटिसूर्यसम
प्रभः ॥ १४ ॥ जयशब्दैर्वोध्यमाणो ययौ नारदसन्निधौ ॥ वत्स वत्स नारदेति जगाद च पुनः पुनः ॥ १५ ॥ किं ते कार्य्यं महाभाग
तपस्ते पूर्णतां गतम् ॥ वसिष्ठ उवाच ॥ इति तन्नारदः श्रुत्वा शिवोक्तं वरवर्णिनि ॥१६॥ उन्मील्य चक्षुषी प्राज्ञो ददर्श शिवमंतिके ॥
तुष्टाव परया भक्त्या सहस्रैर्नामभिस्तथा ॥ १७ ॥ प्राप्तं तत्सर्वमखिलं रागाख्यं परमं शिवम् ॥ उत्पन्नाः शिवतो रागाः पुरुषाः षट्स
म्मिताः ॥ १८ ॥ ततस्तेषां च पत्न्यो वै पंच पंच मम प्रिये ॥ अष्टावष्टौसुताश्चैवपुत्रवध्वस्तथाप्रिये ॥ १९ ॥ इति श्रीस्कांदे केदा
रखंडे रुद्रप्रयागे रागोत्पत्तिर्नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ अरुन्धत्युवाच ॥ ॥ मुने वद महाभाग नारदेन यथा स्तुतः ॥
सहस्रनामभिः पुण्यैः पापघ्नैः सर्वकामदैः ॥ १ ॥ यानि यानि च नामानि नारदोक्तानि वै मुने ॥ रागोत्पत्तिं विस्तरेण नामानि च वद
प्रिय ॥ २ ॥ वसिष्ठ उवाच ॥ साधु साधु महाभागे शिवभक्तिर्यतस्त्वयि ॥ तपःशुद्धो नारदोसौ ददर्श परमेश्वरम् ॥ ३ ॥ दृष्ट्वा तद्वै परं
ब्रह्म सर्वज्ञो मुनिपुंगवः ॥ सस्मार प्रिय नामानि शिवोक्तानि प्रियां प्रति ॥४॥ नारदोस्य ऋषिः प्रोक्तोऽनुष्टुप्छंदः प्रकीर्तितः ॥ श्रीशिवः
परमात्मा वै देवता समुदाहृता ॥ ५ ॥ धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥ सर्वारंभप्रसिद्ध्यर्थमाधिव्याधिनिवृत्तये ॥ ६ ॥

नारदउवाच ॥ श्रीशिवःशिवदोभव्योभावगम्योवृषाकपिः ॥ वृषध्वजोवृषारूढोवृषकर्त्तावृषेश्वरः ॥ ७ ॥ शिवाधिपःशितःशंभुःस्वयंभूरात्म
विद्विभुः ॥ सर्वज्ञोबहुहंताचभवानीपतिरच्युतः ॥ ८ ॥ तंत्रशास्त्रप्रमोदीचतंत्रशास्त्रप्रदर्शकः ॥ तंत्रप्रियस्तंत्रगम्योतंत्रोवानंततंत्रकः ॥
॥ ९ ॥ तंत्रीनादप्रियोदेवोभक्ततंत्रविमोहितः ॥ तंत्रात्मातंत्रनिलयस्तंत्रदर्शीसुतंत्रकः ॥ १० ॥ महादेव उमाकांतश्चंद्रशेखर ईश्वरः ॥
धूर्जटिस्त्र्यम्बको धूर्त्तो धूर्त्तशत्रुरमावसुः ॥११॥ वामदेवो मृडः शंभुः सुरेशो दैत्यमर्दनः ॥ अंधकारहरो दण्डो ज्योतिष्मान् हरवल्लभः ॥
॥१२॥ गंगाधरो रमाकांतः सर्वनाथः सुरारिहा ॥ प्रचंडदैत्यविध्वंसी जंभारातिररिंदमः॥१३॥दानप्रियो दानतृप्तो दानदो दानवांतकः॥
करिदानप्रियो दानी दानात्मा दानपूजितः ॥ १४ ॥ दानगम्यो ययातिश्च दयासिंधुर्दयावहः ॥ भक्तिगम्यो भक्तसेव्यो भक्तिसंतुष्टमानसः
॥ १५ ॥ भक्ताभयप्रदो भक्तो भक्ताभीष्टप्रदायकः ॥ भानुमान् भानुनेत्रश्च भानुवृंदसमप्रभः ॥ १६ ॥ सहस्रभानुः स्वर्भानुरात्मभानुर्जया
वहः ॥ जयंतो जयदो यज्ञो यज्ञात्मा यज्ञविज्जयः ॥ १७ ॥ जयसेनो जयत्सेनो विजयो विजयप्रियः ॥ जाज्वल्यमानो ज्यायांश्च
जलात्मा जलजो जवः॥ १८ ॥ पुरातनः पुरारातिस्त्रिपुरघ्नो रिपुघ्नकः ॥ पुराणः पुरुषः पुण्यः पुण्यगम्योतिपुण्यदः ॥ १९ ॥ प्रभंजनः
प्रभुःपूर्णः पूर्वदेवः प्रतापवान् ॥ प्रबलोतिबलो देवो वेदवेद्यो जनाधिपः॥२०॥ नरेशो नारदो मानी दैत्यमानविमर्दनः ॥ अमानो निर्ममो
मान्यो मानवो मधुसूदनः ॥ २१ ॥ मनुपुत्रो मयारातिर्मंगलो मंगलास्पदः ॥ मालवो मलयावासो महोभिः संयुतोनलः ॥ २२ ॥
नलाराध्यो नीलवासा नलात्मा नलपूजितः ॥ नलाधीशो नैगमिको निगमेन सुपूजितः ॥ २३ ॥ निगमावेद्यरूपो हि धन्यो धेनुरंमि
त्रहा ॥ कल्पवृक्षः कामधेनुर्धनुर्धारी महेश्वरः ॥ २४ ॥ दमनो दामिनीकांतो दामोदर हरेश्वरः ॥ दमो दांतो दयावांश्च दानवेशो दनु
प्रियः ॥ २५ ॥ दन्वीश्वरो दमी दंती दन्वाराध्यो जनुप्रदः ॥ आनंदकंदो मंदारिर्मंदारसुमपूजितः ॥ २६ ॥ नित्यानन्दो महानंदो रमा
नंदो निराश्रयः ॥ निर्ज्जरो निर्जरप्रीतो निर्ज्जरेश्वरपूजितः ॥ २७ ॥ कैलासवासी विश्वात्मा विश्वेशो विश्वतत्परः ॥ विश्वंभरो विश्वसहो ॥ ६९
विश्वरूपो महीधरः ॥ २८ ॥ केदारनिलयो भर्त्ता धर्त्ता हर्त्ता हरीश्वरः ॥ विष्णुसेव्यो जिष्णुनाथो जिष्णुः कृष्णो धरापतिः ॥ २९ ॥

बदरीनायको नेता रामभक्तो रमाप्रियः ॥ रमानाथो रामसेव्यः शैव्यापतिरकल्मषः ॥ २० ॥ धराधीशो महानेत्रस्त्रिनेत्रश्चारुविक्रमः ॥
त्रिविक्रमो विक्रमेशस्त्रिलोकेशस्त्रयीमयः ॥ २१ ॥ वेदगम्यो वेदवादी वेदात्मा वेदवर्द्धनः ॥ देवेश्वरो देवपूज्यो वेदांतार्थप्रचारकः ॥२२॥
वेदांतवेद्यो वैण्वश्च कविः काव्यकलाधरः ॥ कालात्मा कालहृत्कालः कलात्मा कालसूदनः ॥ २३ ॥ केलीप्रियः सुकेलिश्च कलंकर
हितः क्रमः ॥ कर्मकर्त्ता सुकर्मा च कर्मेशः कर्मवर्जितः ॥ २४ ॥ मीमांसाशास्त्रवेत्ता यः शर्वो मीमांसकप्रियः ॥ प्रकृतिः पुरुषः पंचत
त्त्वज्ञो ज्ञानिनां वरः ॥ २५ ॥ सांख्यशास्त्रप्रमोदी च संख्यावान्पंडितः प्रभुः ॥ असंख्यातगुणग्रामो गुणात्मा गुणवर्जितः ॥ २६ ॥
निर्गुणो निरंहकारो रसाधीशो रसप्रियः ॥ रसास्वादी रसावेद्यो नीरसो नीरजप्रियः ॥ २७ ॥ निर्मलो निरनुक्रोशी निर्दन्तो निर्भय
प्रदः ॥ गंगाख्यो गांगतोयं च मीनध्वजविमर्द्दनः ॥ २८ ॥ अंधकारिर्बृहद्दंष्ट्रो बृहदश्वो बृहत्तनुः ॥ बृहस्पतिः सुराचार्य्यो गीर्वाणगणपू
जितः ॥ २९ ॥ वासुदेवो महाबाहुर्विरूपाक्षो विरूपकः ॥ पूष्णो दंतविनाशी च मुरारिर्भगनेत्रहा ॥ ४० ॥ वेदव्यासो नागहारो विषहा
विपनायकः ॥ विरजाः सजलोनंतो वासुकिश्चापराजितः ॥ ४१ ॥ बालो वृद्धो युवा मृत्युर्मृत्युहा भालचन्द्रकः ॥ बलभद्रो बलारातिर्दृ
ढधन्वावृषध्वजः ॥ ४२ ॥ प्रमथेसो गणपतिः कार्तिकेयो वृकोदरः ॥ अग्निगर्भोऽग्निनाभश्च पद्मनाभः प्रभाकरः ॥ ४३ ॥ हिरण्यगर्भो
लोकेशो वेणुनादः प्रतर्द्दनः ॥ वायुर्भर्गो वसुर्भर्गो दक्षः प्राचेतसो मुनिः ॥ ४४ ॥ नादब्रह्मरतो नादी नंदनावास अम्बरः ॥ अम्बरीषो
म्बुनिलयो जामदग्न्यः परात्परः ॥ ४५ ॥ कृतवीर्य्यसुतो राजा कार्त्तवीर्य्यप्रमर्द्दनः ॥ जमदग्निर्जातरूपो जातरूपपरिच्छदः ॥ ४६ ॥
कर्प्पूरगौरो गौरीशो गोपतिर्गोपनायकः ॥ प्राणिश्वरः प्रमाणज्ञोप्रमेयोज्ञाननाशनः ॥ ४७ ॥ हंसो हंसगतिर्मीनो ब्रह्मा लोकपितामहः ॥
यमुनाधीश्वरो याम्यो यमभीतिविमर्द्दनः ॥ ४८ ॥ नारायणो नारपूज्यो वसुवर्णो वसुप्रियः ॥ वासवो बलहा वृत्रहन्ता यंता पराक्रमी ॥
॥ ४९ ॥ बृहदीशो बृहद्भानुर्वर्द्धनो बालवः परः ॥ शरभो नरसंहारी कोलशत्रुर्विभाकरः ॥ ५० ॥ रथचक्रो दशरथो रामः शस्त्रभृतां
वरः ॥ नारदीयो नरानंदो नायकः प्रमथारिहा ॥ ५१ ॥ रुद्रो रौद्रो रुद्रमुख्यो रौद्रात्मा रोमवर्जितः ॥ जलंधरहरो हव्यो हविर्द्धामा

बृहद्धविः ॥ ५२ ॥ रविः सप्तार्चिरनघो द्वादशात्मा दिवाकरः ॥ प्रद्योतनो दिनपतिः सप्तसप्तिर्मरीचिमान् ॥ ५३ ॥ सोमोऽब्जो ग्लौश्च रा
त्रीशः कुजो जैवात्रिको बुधः ॥ शुक्रो दैत्यगुरुर्भौमो भीमो भीमपराक्रमः ॥ ५४ ॥ शनिः पंगुर्मदांधो वै भंगाभक्षणतत्परः ॥ राहुः
केतुः सैंहिकेयो ग्रहात्माग्रहपूजितः ॥५५॥ नक्षत्रेशोऽश्विनी नाथो मैनाक निलयः शुभः ॥ विन्ध्याटवी समाच्छन्नः सेतुबंधानिकेतनः ॥
॥ ५६ ॥ कूर्मपर्वतवासी च वागीशो वाग्विदाम्वरः ॥ योगेश्वरो महानाथः पातालभुवनेश्वरः ॥ ५७ ॥ काशिनाथो नीलकेशो हरिकेशो
मनोहरः ॥ उमाकांतो यमारातिर्बौद्धपर्वतनायकः ॥ ५८ ॥ तटासुरनिहंता च सर्वयज्ञसुपूजितः ॥ गंगाद्वारनिवासो वै वीरभद्रो भया
नकः ॥ ५९ ॥ भानुदत्तो भानुनाथो जरासंधविमर्दनः ॥ यवमालीश्वरः पारो गंडकीनिलयो हरः ॥ ६० ॥ शालग्रामशिलावासी नर्म
दांतटपूजितः ॥ बाण लिंगो बाणपिता बाणाधिर्बाणपूजितः ॥ ६१ ॥ वाणासुरनिहंता च रामबाणो भयापहः ॥ रामदूतो रामनाथो राम
नारायणोव्ययः ॥ ६२ ॥ पार्वतीशः परामृष्टो नारदो नारपूजितः ॥ पर्वतेशः पार्वतीयः पार्वतीप्राणवल्लभः ॥ ६३ ॥ सर्वेश्वरः सर्वकर्त्ता
लोकाध्यक्षो महामतिः ॥ निरालंबो हठाध्यक्षो वननाथो वनाश्रयः ॥ ६४ ॥ श्मशानवासी दमनो मदनारिर्मदालयः ॥ भूत वेतालस
र्वस्वः स्कंदः स्कंदजनिर्जनः ॥ ६५ ॥ वेतालशतनाथो वै वेतालशतपूजितः ॥ वेतालो भैरवाकारो वेतालनिलयो बलः ॥ ६६ ॥ भूर्भु
वःस्वर्वषट्कारो भूतभव्यविभुर्महः ॥ जनो महस्तपः सत्यं पातालनिलयो लयः ॥ ६७ ॥ पत्री पुष्पी फली तोयी महीरूपसमाश्रितः ॥
स्वधा स्वाहा नमस्कारो भद्रो भद्रपतिर्भवः ॥ ६८ ॥ उमापतिर्व्योमकेशो भीमधन्वा भयानकः ॥ पुष्टस्तुष्टोधराधारो वलिदो बलिभृ
द्वली ॥ ६९ ॥ ॐकारो नृमयो मायी विघ्नहर्त्ता गणाधिपः ॥ ह्रीं ह्रौं गम्यो हौं जूँ सः हौं शिवायनमो ज्वरः ॥ ७० ॥ द्रां द्रां रूपो
दुराधर्षो नादबिंद्वात्मकोनिलः ॥ रस्तारो नेत्रनादश्च चण्डीशो मलयाचलः ॥ ७१ ॥ षडक्षरमहामंत्रः शस्त्रभृच्छस्त्रनायकः ॥ शास्त्रवेत्ता
तु शास्त्रीशः शस्त्रमंत्रप्रपूजितः ॥ ७२ ॥ निर्वपुः सुवपुः कांतः कांताजनमनोहरः ॥ भगमाली भगो भाग्यो भगहा भगपूजितः ॥७३॥ ॥ ७०
भगपूजनसंतुष्टो महाभाग्यसुपूजितः ॥ पूजारतो विपाप्मा च क्षितिबीजो धरातिकृत ॥ ७४ ॥ मंडलो मंडलाभासो मंडलार्द्धो विर्म
...मंडलमध्ये वै ...मंडलमंदिरः ॥७५॥ सर्वमंडलसर्वस्वः पूजामंडलमंडितः ॥ पृथ्वीमंडलवासश्च भक्तमंडलपूजितः ॥७६॥

डलः ॥ चंद्रमंडलपूज्यो वै रविमंडलमंदिरः ॥७६॥ सर्वमंडलसर्वस्वः पूजामंडलमंडितः ॥ पृथ्वीमंडलवासश्च भक्तमंडलपूजितः ॥७६॥ मंडालात्परासिद्धिश्च महामंडलमंडलः ॥ मुखमंडलशोभाढ्यो राजमंडलवर्ज्जितः ॥ ७७ ॥ निष्प्रभः प्रभुरीशानो मृगव्याधो मृगारिहा ॥ मृगांकशोभो हेमाढ्यो हिमात्मा हिमसुंदरः ॥ ७८ ॥ हेमहेमनिधिर्हेमो हिमानीशो हिमप्रियः ॥ शीतवातसहःशीतो ह्यशीतिगणसेवितः ॥ ॥ ७९ ॥ आशाश्रयो दिगात्मा च जीवो जीवाश्रयः पतिः ॥ पतिताशी पतिः पांथो निःपांथोनर्थनाशकः ॥ ८० ॥ बुद्धिदो बुद्धिनिलयो बुद्धो बुद्धपतिर्धवः ॥ मेधाकरो मेधमानो मध्यो मेध्यो मधुप्रियः ॥ ८१ ॥ मधुव्यो मधुमान्बंधुर्धुंधुमारो धवाश्रयः ॥ धर्मी धर्मप्रियो धन्यो धान्यराशिर्धनावहः ॥ ८२ ॥ धरात्मजो धनो धान्यो मान्यनाथो मदालसः ॥ लम्बोदरोलंकरिष्णुर्लंकानाथसुपूजितः ॥ ॥ ८३ ॥ लंकाभस्मप्रियो लंको लंकेशरिपुपूजितः ॥ समुद्रो मकरावासो मकरंदो मदान्वितः ॥ ८४ ॥ मथुरानाथकोतंद्रो मथुरावासतत्परः ॥ वृंदावनमनःप्रीतिर्वृंदापूजितविग्रहः ॥ ८५ ॥ यमुनापुलिनावासः कंसचाणूरमर्दनः ॥ अरिष्टहा शुभ तनुर्माधवो माधवाग्रजः॥ ॥ ८६ ॥ वसुदेवसुतः कृष्णः कृष्णाप्रियतमः शुचिः ॥ कृष्णद्वैपायनो वेधाः सृष्टिसंहारकारकः ॥ ८७ ॥ चतुर्विधो विश्वहर्त्ता धाता धर्मपरायणः ॥ यातुधानोमहाकायो रक्षः कुलविनाशनः ॥८८॥ घण्टानादोमहानादोभेरीशब्दपरायणः ॥ परमेशः पराविज्ञो ज्ञानगम्यो गणेश्वरः ॥ ८९ ॥ पार्श्वमौलिश्चंद्रमौलिर्धर्ममौलिः सुरारिहा ॥ जंघाप्रतर्दनो जंभो जंभारातिररिंदमः ॥ ९० ॥ ॐकारगम्यो नादेशः सोमेशः सिद्धिकारणम् ॥ अकारोमृतकल्पश्च आनन्दो वृषभध्वजः ॥ ९१ ॥ आत्मा रतिश्चात्मगम्यो यथार्थात्मा नरारिहा ॥ इकारश्चेतिकालश्च इति होतिप्रभंजनः ॥ ९२ ॥ ईशितारिभवो ऋक्ष ऋकारवरपूजितः ॥ ऌवर्णरूपो ऌकारो ऌवर्णस्थो लरात्मवान् ॥ ९३ ॥ एऐरूपो महानेत्रो जन्ममृत्युविवर्जितः ॥ ओतुरौतुरंडजस्थो हंतहंता कलाकरः ॥ ९४ ॥ कालीनाथः खंजनाक्षो खंडोखंडितविक्रमः ॥ गंधर्वेशो गणारातिर्घंटाभरणपूजितः ॥ ९५ ॥ ङकारो ङीप्रत्य यश्च चामरश्चामराश्रयः ॥ चीराम्बरधरश्चारुश्चारुचंचुश्चरेश्वरः ॥ ९६ ॥ छत्री छत्रपतिश्छात्रश्छत्रेशश्छात्रपूजितः ॥ झर्झरो झंकृतिर्झजा झंझेशो झपरो झरः ॥ ९७ ॥ झंकेशांडधरो झारिर्घंकर्घंकारपूजितः ॥

रोमहारिर्वृषारिश्च ढुंढिराजो झलात्मजः ॥९८॥ ढोलशब्दरतो ढक्का ढकारेण प्रपूजितः ॥ तारापतिस्ततस्तंतुस्तारेशः स्तंभसंश्रितः ॥
॥ ९९ ॥ थवर्णस्थूत्करःस्थूलो दनुजो दनुजांतकृत् ॥ दाडिमीकुसुमप्रख्यो दांतारिर्दर्दरातिगः ॥ १०० ॥ दंतवक्रो दंतजिह्वो दंतवक्रवि
नाशनः ॥ धवो धवाग्रजो धुंधुर्धौंधुमारिर्धराधरः ॥ १०१ ॥ धम्मिल्लीनीजनानंदो धर्माधर्मविवर्जितः ॥ नागेशो नागनिलयो नारदादि
भिरार्चितः ॥ १०२ ॥ नंदो नंदीपतिर्नंदी नंदीश्वरसहायवान् ॥ पणः प्राणीश्वरः पांथः पाथेयः पथिकार्चितः ॥ १०३ ॥ पानीयाधिपतिः
पाथः फलवान् फलसंस्कृतः ॥ फणीशतविभूषा च फणीफूत्कारमंडितः ॥ ॥ १०४ ॥ फालः फल्गुरथः फांतो वेणुनाथो वनेचरः ॥
वन्यप्रियो वनानंदो वनस्पतिगणेश्वरः ॥१०५॥ वालीनिहंता वाल्मीको वृंदावनकुतूहली ॥ वेणुनादप्रियो वैद्यो भगणो भगणार्चितः ॥
॥ १०६ ॥ भेरुंडो भासको भासी भास्करो भानुपूजितः ॥ भद्रो भाद्रपदो भाद्रो भद्रदो भाद्रतत्परः ॥ १०७ ॥ मेनकापतिमन्द्राश्वो
महामैनाकपर्वतः ॥ मानवो मनुनाथश्च मदहामदलोचनः ॥ १०८ ॥ यज्ञाशी याज्ञिको यामी यमभीतिविमर्द्दनः ॥ यमको यमुनावासो
यमसंयमदायकः ॥१०९॥ रक्ताक्षो रक्तदंतश्च राजसो राजसप्रियः ॥ रंतिदेवो रत्नमतीरामनाथो रमाप्रियः ॥ ११० ॥ लक्ष्मीकरो लाक्ष
णिको लक्षेशो लक्षपूजितः ॥ लंबोदरो लांगलिको लक्षलाभपितामहः ॥ १११ ॥ बालको बालकप्रीतो वरेण्यो बालपूजितः ॥ शर्वः
शर्वी शरी शास्त्री शर्वरीगणसुंदरः ॥ ११२ ॥ शाकंभरीपीठसंस्थः शाकद्वीपनिवासकः ॥ षोढासमासनिलयः षंढः षाढवमंदिरः ॥
॥ ११३ ॥ षांडवाडंबरः षांड्यः षष्ठीपूजनतत्परः ॥ सर्वेश्वरः सर्वतत्त्वः सामगम्योसमानकः ॥ ११४ ॥ सेतुः संसारसंहर्त्ता सारः सार
स्वतप्रियः ॥ हर्म्यनाथो हर्म्यकर्त्ता हेतुहा निहनोहरः ॥ ११५ ॥ हालाप्रियो हलापांगो हनुमान्पतिरव्ययः ॥ सर्वायुधधरोभीष्टो भयो
भास्वान् भयांतकृत् ॥ ११६ ॥ कुब्जाम्रकनिवासश्च झिंटीशो वाग्विदांवरः ॥ रेणुका दुःखहंता च विराटनगरस्थितः ॥ ११७ ॥ जमद
ग्निर्भार्गवो वै पुलस्त्यः पुलहः क्रतुः ॥ क्रांतिराजो द्रोणपुत्रोऽश्वत्थामा सुरथी कृपः ॥ ११८ ॥ कामाख्यनिलयो विश्वनिलयो भुवने
श्वरः ॥ रघूद्वहो राज्यदाता राजनीतिकरात्रिणः ॥ ११९ ॥ राजराजेश्वराकांतो राजराजसुपूजितः ॥ सर्वबंधविनिर्मुक्तः सर्वदारिद्र्यना

शनः ॥१२०॥ जटामण्डलसर्वस्वो गंगाधारासुमंडितः ॥ जीवदाताशयो धेनुर्यादवो यदुपुंगवः ॥१२१॥ मूर्खवागीश्वरो भर्गो मूर्खविद्या दयानिधिः ॥ दीनदुःखनिहंता च दीनदाता दयार्णवः ॥ १२२ ॥ गंगातरंगभूषा च गंगाभक्तिपरायणः ॥ भगीरथप्राणदाता ककुत्स्थनृपपूजितः ॥ १२३ ॥ मांधातृजयदो वेणुः पृथुः पृथुयशः स्थिरः ॥ जाल्मपादो जाल्मनाथो जाल्मप्रीतिविवर्द्धनः ॥ १२४ ॥ संध्याभर्त्ता रौद्रवपुर्महानीलशिलास्थितः ॥ शंभलग्रामवासश्च प्रियानूपमपत्तनः ॥ १२५ ॥ शांडिल्यो ब्रह्मशौंडाख्यः शारदो वैद्यजीवनः ॥ राजवृक्षो ज्वरघ्नश्च निर्गुंडीमूलसंस्थितः ॥ १२६ ॥ अतिसारहरो जातीवल्कबीजो जलं नभः ॥ जाह्नवीदेशनिलयो भक्तग्रामनिकेतनः ॥१२७॥ पुराणगम्यो गम्येशः स्कांदादिप्रतिपादकः ॥ अष्टादशपुराणानां कर्त्ता काव्येश्वरः प्रभुः ॥ १२८ ॥ जलयंत्रो जलावासो जलधेनुर्जलोदरः ॥ चिकित्सको भिषग्वैद्यो निर्लोभो लोभतस्करः ॥ १२९ ॥ चिदानंदश्चिदाभासश्चिदात्मा चित्तवर्जितः ॥ चित्स्वरूपश्चिरायुश्च चिरायुरभिदायकः ॥ १३० ॥ चीत्कारगुणसंतुष्टोचलोनंतप्रदायकः ॥ मासः पक्षो ह्यहोरात्रमृतुस्त्वयनरूपकः ॥ १३१ ॥ संवत्सरः परः कालः कलाकाष्ठात्मकः कलिः ॥ सत्यं त्रेता द्वापरश्च तथा स्वायंभुवः स्मृतः ॥ १३२ ॥ स्वारोचिषस्तामसश्च औत्तमी रैवतस्तथा ॥ चाक्षुषो वैवस्वतश्च सावर्णिः सूर्यसंभवः ॥ १३३ ॥ दक्षसावर्णिको मेरुसावार्णिक इतिप्रभः ॥ रौच्यो भौत्यस्तथा गव्यो भूतिदश्च तथा दरः ॥ १३४ ॥ रागज्ञानप्रदो रागी रागी रागपरायणः ॥ नारदः प्राणनिलयो नीलांबरधरोव्ययः ॥ १३५ ॥ अनेकनामा गंगेशो गंगातीरनिकेतनः ॥ गंगाजल निवासश्च गंगाजलपरायणः ॥ १३६ ॥ वसिष्ठ उवाच ॥ नाम्नामेतत्सहस्रं वै नारदेनोदितं तु यत् ॥ तत्तेद्य कथितं देवि सर्वापत्तिनिवारणम् ॥ १३७ ॥ पठतः स्तोत्रमेतद्वै नाम्नां साहस्रमी शितुः ॥ दारिद्र्यं नश्यते क्षिप्रं षड्भिर्मासैर्वरानने ॥ १३८॥ यस्येदं लिखितं गेहे स्तोत्रं वै परमात्मनः ॥ नित्यं सन्निहितस्तत्र महादेवः शिवान्वितः ॥ १३९ ॥ स एव त्रिषु लोकेषु धन्यः स्याच्छिवभक्तितः ॥ शिव एव परं ब्रह्म शिवान्नास्त्यपरः क्वचित् ॥ १४० ॥ ब्रह्मरूपेण सृजति पाल्यते विष्णुरूपिणा ॥ रुद्ररूपेण नयति भस्मसात् स चराचरम् ॥ १४१ ॥ तस्मात्सर्वप्रयत्नेन मुमुक्षुः शिवमभ्यसेत् ॥ स्तोत्रं सहस्रनामाख्यं पठित्वा श्रीशिवो भवेत् ॥१४२॥

यं यं चिंतयते कामं तं तं प्राप्नोत्यसंशयम् ॥ पुत्रार्थी लभते पुत्रान्धनार्थी लभते धनम् ॥ १४३ ॥ राज्यार्थी लभते राज्यं यस्त्विदं
नियतः पठेत् ॥ दुःस्वप्ननाशनं पुण्यं सर्वपापप्रणाशनम् ॥ १४४ ॥ नास्मात्किंचिन्महाभागे ह्यन्यदस्ति महीतले ॥ तावद्गर्जंति पापानि
शरीरस्थान्यरुंधति ॥ १४५ ॥ यावन्नपठते स्तोत्रं श्रीशिवस्य परात्मनः ॥ सिंहचौरग्रहग्रस्तो मुच्यते पठनात्प्रिये ॥ सर्वव्याधिविनि
र्मुक्तो लभते परमं सुखम् ॥ १४६ ॥ प्रातरुत्थाय यः स्तोत्रं पठते भक्तितत्परः ॥ सर्वापत्तिविनिर्मुक्तो धनधान्यसुतान्वितः ॥ जायते
नात्र संदेहः शिवस्य वचनं यथा ॥ १४७ ॥ इति श्रीस्कांदे केदारखण्डे कैलासप्रशंसायां श्रीशिवसहस्रनामस्तोत्रं नाम चतुःषष्टितमो
ऽध्यायः ॥ ६४ ॥ ॥ वसिष्ठ उवाच ॥ ॥ स्तुत एवं नारदेन तदैव भगवाञ्छिवः ॥ प्रत्यक्षमगमत्तस्य नारदस्य महात्मनः ॥ १ ॥
नानाविभूतिसंपन्नो नानागणविराजितः ॥ वृषारूढो महाकायस्त्रिनेत्रो हिमसुंदरः ॥ २ ॥ व्यालयज्ञोपवीती च व्याघ्रचर्माम्बरोव्ययः ॥
उमया सहितः शंभुरुवाच वचनं प्रिये ॥ ३ ॥ धन्योसि त्वं महाभाग यस्येयं भक्तिरीश्वरे ॥ संतुष्टोस्मि तरां विप्र वरं वरय सुव्रत ॥४॥
दुर्लभं नास्ति ते किंचित्त्रिषु लोकेषु सर्वदा ॥ मद्भक्तो नास्ति त्रैलोक्ये त्वत्तोन्यः प्रियको मम ॥ ५ ॥ वरं ददामि ते सर्वं यत्ते मनसि
संस्थितम् ॥ यन्न कस्मै पुरा तच्च तुभ्यं दास्यामि नारद ॥ ६ ॥ नारद उवाच ॥ धन्योस्मि कृतकृत्योस्मि दर्शनात्ते वृषध्वज ॥ संपन्नो
मे महान्कामो यस्य तुष्टो भवाञ्छिवः ॥ ७ ॥ त्वत्प्रसादेन सर्वं हि प्राप्तं वै दर्शनात्तव ॥ संगीतार्णवतः किंचिद्यथा जानामि तत्कुरु ॥
॥ ८ ॥ नादरूपो भवान्देवः नादेनैव प्रियः सदा ॥ ततोहं नादवेदं हि जानीयां त्वत्प्रसादतः ॥ ९ ॥ न त्वं योगशतैस्तुष्टो न तीर्थ
शतमज्जनात् ॥ न हि दानसहस्रेभ्यो न व्रतैः कोटिसंमितैः ॥ १० ॥ गीताद्यथा महादेव संतुष्टः स्यान्महेश्वर ॥ अहं च गानसंसर्गात्तव
भक्तिपथे स्थितः ॥ ११ ॥ संगीतशास्त्रसर्वस्वं वद मे सुकृपानिधे ॥ येनाहं सर्वरागांश्च नादब्रह्ममयान्परान् ॥१२॥ जानीयां त्वत्प्रसादेन
संतुष्टश्चेद्यतो मयि ॥ क्वचिन्नास्त्यपरो ज्ञाता ब्रह्मणः परमात्मनः ॥ १३ ॥ वसिष्ठ उवाच ॥ श्रीशिवोपि तदा श्रुत्वा विज्ञप्तिं नारदस्य ॥ ७२
तु ॥ प्रसन्नश्चाब्रवीत् सर्वं नादशास्त्रमुमापतिः ॥ १४ ॥ ईश्वर उवाच ॥ संगीतं नाम शास्त्रं ते कथयामि महामुने ॥ त्रैलोक्यदीपकं नाम

ये पठंति समाहिताः ॥ १५ ॥ पश्यंति ते तु त्रैलोक्यं सर्वज्ञाश्च भवंति हि ॥ पार्वत्यै कथितं यद्वै तत्ते वक्ष्यामि साम्प्रतम् ॥ १६ ॥
गीतं नृत्यं च पाषंडं स्वररत्नानिवेदितम् ॥ ध्रुवं रूपकसंकाशं परिबंधं तथैव च ॥ १७ ॥ गाहाकवित्वजे चैव रूपकं यतितालकम् ॥
पाषंडदर्शनं यस्य देहा हस्तं निवेदितम् ॥ १८ ॥ व्याहर्तुं कामतो मैनां सर्वं लयसमन्वितम् ॥ मृदंग परिवादं च तत्सर्वं कथयाम्य
हम् ॥ १९ ॥ ज्ञानात्मकं तथा गीतं नादवक्ता च वाद्यकम् ॥ तथा द्वयानुगं नृत्यं गीताधीनमतस्त्रयम् ॥ २० ॥ नादेन त्यजते वर्णः पदं
वर्णात्पदाद्वचः ॥ वचसा सर्वमेतद्धि तस्मान्नादात्मकं जगत् ॥ २१ ॥ नादस्तु द्विविधः प्रोक्तोनाहताहतभेदतः ॥ पिंडे तत्सर्वमखिलं
तस्मात्पिंडो विविच्यते ॥ २२ ॥ परमात्मा चिदानंदः स्वयंज्योतिर्निरंजनः ॥ अद्वितीयं चिदाभासं परं ब्रह्म सनातनम् ॥ २३ ॥ न
वेत्ति मायया च्छन्नो नरो नारायणं परम् ॥ चामीकरं कंठगतं यथाज्ञो नारद प्रभुम् ॥२४॥ अविद्योपहता जीवा यथाग्नेर्विस्फुलिंगकाः ॥
दार्वाद्युपाधिसंभिन्नास्तदंशा एव नारद ॥ २५ ॥ अनादिभिः कर्मभिस्ते सुखदुःखात्मकैर्मुने ॥ नानारूपाणि दधति देहानाद्युश्च कर्म
जान् ॥ २६ ॥ सूक्ष्ममेतच्छरीरं तु लिंगाख्यं परमं मतम् ॥ सूक्ष्मेंद्रियं पंचभूतप्राणावस्थात्मकं विदुः ॥ २७ ॥ उपभोगाय जीवानां
जगत्सृजति लोकपः ॥ परमात्मा परानंदो विश्रांत्यै संहरत्यजः ॥२८॥ पुनः सृष्टिं च संहारं प्रवाहानादिसंभवम् ॥ भिन्नास्ते ह्यात्मना
जीवा भिन्नं चैवात्मनो जगत् ॥२९॥ सृजन्प्रकृत्या भिन्नोसौ सुवर्णात् कुंडलादिवत् ॥ रज्जौ भुजंगसंभ्रांत्या ज्ञायते वै यथा परः ॥३०॥
आत्मनः पूर्वमाकाशस्ततो वायुस्ततोनलः ॥ अनलात्तोयमेतस्मात्पृथिवी समजायत ॥३१॥ महाभूतानि चोक्तानि तनुरेषा हि ब्रह्मणः ॥
परमात्मासृजद्विश्वं तस्मै वेदान्ददौ हरिः ॥ ३२ ॥ भौतिकं वेदशब्दैश्च ससर्ज स च वै जगत ॥ नव प्रजापतीन्ब्रह्मा मनसैव तदासृजत् ॥
॥ ३३ ॥ तेभ्यस्तु रैतसी सृष्टिः शरीराणां निगद्यते ॥ चतुर्विधानि चैतानि शरीराणि महामुने ॥ ३४ ॥ स्वेदोद्भिदजराय्वंडभेदाद्वै जग
तीतले ॥ यूकादयः स्वेदजाता ह्युद्भिज्जाश्च लतादयः ॥ ३५ ॥ जरायोर्मानुषादीनां पक्ष्यादीनां तदंडतः ॥ नादः सर्वत्र देहेषु विशेषा
न्मानुषे स्मृतः ॥ ३६ ॥ देहोत्पत्तिं मानुषस्य शृणु तस्मान्महामुने ॥ आकाशे क्षेत्रपः पूर्वं तस्माद्वायुः समागतः ॥ ३७ ॥ वायुर्धूम्रस्त

तश्चाभ्रमभ्रं मेघेवातिष्ठते ॥ यज्ञेनाप्यायितो ग्रस्तो ग्रीष्मे वै रश्मिभी रसः ॥ ३८ ॥ सूर्य्यो मेघे घनरसं धत्ते तं वै बलाहकः ॥ यदा
वर्षति जीवेन वर्षेण पृथिवीतले ॥ ३९ ॥ ओषधींश्च तथा वृक्षान्संक्रामत्यविलक्षितः ॥ तदन्नजातं ताभ्यश्च पुरुषैः शुक्रतां गतम् ॥४०॥
ऋतुस्नाता यदा योषिदार्त्तवं जायते रजः ॥ निषिक्तं समरात्रेषु पुरुषः स्मरमंदिरे ॥ ४१ ॥ विषमासु तदा नारी गर्भाशयगतं भवेत् ॥
कर्मणा प्रेरितो जीवो गर्भाशयगतस्तदा ॥ ४२ ॥ गर्भत्वं चैव प्राप्नोति जलभूतोपि भौतिकः ॥ बुद्बुदः पंचरात्रेण कललं पंचविंशतिः ॥
॥ ४३ ॥ द्रवत्वं मासि चाप्नोति रेतःशोणितसंगमः ॥ द्वितीये मासि संप्राप्ते पेशी स्याद्घनमर्बुदम् ॥ ४४ ॥ स्त्रीपुन्नपुंसका भावा जायंते
मुनिवंदित ॥ तृतीये च तथा मासे करांघ्रिशिरसोंकुराः ॥ ४५ ॥ अंगप्रत्यंगभागाश्च सूक्ष्माः स्युर्युगपन्मुने ॥ विहायश्मश्रुदन्तादीन्य
तस्ते प्रकृतेर्भवाः ॥ ४६ ॥ चतुर्थे मासिव्यक्तानि अंगांन्यपि हि नारद ॥ शौर्यादयस्तथा भावाः पुरुषाणां महामुने ॥ ४७ ॥ भीरुत्वा
द्यास्तथा स्त्रीणां संकीर्णः संकरात्मनाम् ॥ यादृक्प्रकृतिको गर्भे तादृशी जननी तथा ॥ ४८ ॥ मातृजं चापि हृदयं विषयानपि कांक्ष
ति ॥ अत एव महाभाग नारीं दौहृदिनीं विदुः ॥ ४९ ॥ मनोभीष्टाप्रदानाद्धि गर्भस्य व्यंगतादयः ॥ तस्मात्सर्वप्रयत्नेन तन्मनोभीष्टमा
चरेत् ॥ ५० ॥ मातुर्यद्विषयालाभः स तु स्यात्तेन दुःखितः ॥ दोहदादर्थवान् भोगी राजकीयो भवेत्सुतः ॥ ५१ ॥ अलंकारप्रियश्चैव
तपस्वी धर्मतत्परः ॥ देवतादर्शने प्रीतो भीतो भुजगदर्शने ॥ ५२ ॥ गोधासनात्तु निद्रालुर्बलवान् मांसभक्षणात् ॥ माहिषेण सुरक्ताक्षं
लोमशं च प्रसूयते ॥ ५३ ॥ एवं सर्वविकाराश्च संपद्यंते नरेखिलाः ॥ पंचमे च तथा मासे मांसशोणितपुष्टता ॥ ५४ ॥ अंगानां संध
यश्चैव विविच्यंते पृथक्पृथक् ॥ षष्ठे मासि महाभाग नखस्नायुविविक्तता ॥ ५५ ॥ रोमाणां च तथा विप्र बलं चैव सुवर्णकम् ॥ सप्तमे
ह्यंगसंपूर्त्तिर्ज्ञायते च तपोनिधे ॥ ५६ ॥ अधोमुखः स्वहस्ताभ्यां कर्णरंध्रे पिधाय सः ॥ उद्विग्नो भ्रांतचेतात्र गर्भस्थमलसंवृतः ॥५७॥
स्मरते पूर्वकर्माणि ह्यनुभूतान्यनेकशः ॥ नाना जातीस्तथा स्वस्य गर्भवासप्रपीडितः ॥ ५८ ॥ धिक्करोति तदा त्मानं निंदते च पुनः
पुनः ॥ केन वै कर्म्मणा मुक्तो भवेयं गर्भवासतः ॥५९॥ पापात्माहं येन दुःखमेतद्भोक्ष्यामि दुःखितः ॥ पुनःकदाचित्संसारे भवेयं विष्णु

तत्परः ॥ ६० ॥ गंगास्नानरतो यस्मान्नभवेयं पुनर्यथा ॥ इत्यादि मानसेनेच्छन् ह्यष्टमे बलपूर्णता ॥ ६१ ॥ नवमादिषु मासेषु समयः प्रसवस्य हि ॥ अनुभुंक्ते स्वकर्माणि गर्भस्थः पुण्यवर्जितः ॥ ६२ ॥ दुःखेन महताविष्टो ध्यायते च परात्परम् ॥ नाडी रसवहा मातुरनुबद्धा पराभिधा ॥ ६३ ॥ नाभिस्था स्रवते चास्य गर्भस्थस्य मुखे मुने ॥ कृतांजलिपुटो भाले पृष्ठे मातुः समास्थितः ॥ ६४ ॥ आस्ते संकोचयन्गात्रं गर्भदक्षिणपार्श्वगः ॥ नारी तु वामपार्श्वस्था क्लीबो मध्ये समास्थितः ॥ ६५ ॥ प्रसूतिमारुतैर्विप्र क्रियतेधःशिराः शिशुः ॥ महदार्त्तिसमायुक्तः प्रेरितः सूतिमारुतैः ॥ ६६ ॥ संकोचयंस्तु गात्राणि यंत्रच्छिद्रेण वै तदा ॥ निःसार्य्यते प्रकुर्वन्स मातुरार्त्तिं मुनीश्वर ॥ ६७ ॥ पूयक्लिन्नो यथा कीटो व्रणा दिव महौषधैः ॥ संसारवायुना स्पृष्टो जातमात्रस्तदैव हि ॥ ६८ ॥ पूर्वं संस्कारसंपन्नो नष्टान्यस्मृतिरंजसा ॥ स्तन्यपाने प्रवृत्तोसौ बालको भवमोहितः ॥ ६९ ॥ मातृजाः पितृजा भावा षड्विधाः सर्वदेहिनाम् ॥ प्रसंगात्तानहं वक्ष्ये नादहेतून्महामुने ॥ ७० ॥ आत्मजा रजसा प्रोक्ताः सात्वताः सत्वसंभवाः ॥ तमोभवास्तथा भावास्तामसाः परिकीर्त्तिताः ॥ ॥ ७१ ॥ मृदवो सृक्तथा मेदो प्लीहा मज्जा यकृद्गुदः ॥ हृदयं नाभिरित्याद्या मातृजाः समुदीरिताः ॥ ७२ ॥ श्मश्रूणि रोमकेशाश्च स्नायुर्धमनयो नखाः ॥ दंतास्तथैव शुक्रं च भावाः पित्र्युद्भवाः स्थिराः ॥ ७३ ॥ वपुर्वर्द्धिष्णुता रूपं बलं वृद्धिस्तथा स्थितिः ॥ अलब्धत्वं तथा तृप्तिरित्याद्या राजसा मताः ॥ ७४ ॥ इच्छा द्वेषः सुखं दुःखं प्रयत्नोत्तानमेव च ॥ धर्माधर्मौ तथा चाथुर्भावना इंद्रियाणि च ॥ ७५ ॥ आत्मजास्तु महाभाग प्रोक्ता भावा मदादिभिः ॥ ज्ञानेन्द्रियाणि वक्ष्यामि तथा कर्मेन्द्रियाणि च ॥ ७६ ॥ चक्षुः श्रोत्रं तथा जिह्वा स्पर्शनं घ्राणमेव च ॥ कर्मेंद्रियाणि वाक्चैव करांघ्री गुदमेहने ॥ ७७ ॥ विषयाः शब्दरूपे च स्पर्शो गंधस्तथा रसः ॥ वचनादानगमना विसर्गानंदनाः परे ॥ ७८ ॥ क्रियास्तेषां महाभाग मनोबुद्ध्यंतरद्वयम् ॥ सुखदुःखे मनोहेतुः स्मृतिर्भीतिर्विकल्पकम् ॥ ॥ ७९ ॥ धियः क्रियाः समाख्याताः क्रमादेव महामुने ॥ तदंककरणं भेदास्त्रिधा प्रोक्तास्त्रिभिर्गुणैः ॥ ८० ॥ आस्तिक्यं देवभक्तिश्च विप्रभक्तिस्तथैव च ॥ इत्याद्याः सात्विका भावा राजसांश्च तथा शृणु ॥ ८१ ॥ कामः क्रोधस्तथा मानो मदोहंमान एव च ॥ इत्याद्या

राजसाः प्रोक्ता निद्रालस्यं प्रमादकः ॥ ८२ ॥ हिंसासूयाप्रभृतयस्तामसाः परिकीर्त्तिताः ॥ अनालस्यं तथारोग्यं प्रसन्नेंद्रियता तथा ॥ ॥ ८३ ॥ इत्याद्याः स्वात्मजा भावाः प्रोक्ता योगविशारदैः ॥ पंच भूतात्मको देहो यस्माद्गुणको मतः ॥ ८४ ॥ उत्क्षेपणादिकर्माणि पंच प्रोक्तानि योगिभिः ॥ प्राणापानौ तथा व्यानः समानोदानकौ तथा ॥ ८५ ॥ नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ॥ दशैते वायवः प्रोक्ता विकृतश्च तथा ततः ॥ ८६ ॥ तेषां श्रेष्ठस्तथा प्राणो नाभिकंठादिषु स्थितः ॥ मुखनासिकयोर्नाभौ हृत्कंजे संचरत्यसौ ॥ ॥ ८७ ॥ उच्चारणं च शब्दस्य निश्वासोच्छ्वासकासकाः ॥ ८३ ॥ एतेषां कारणं प्रोक्तोऽपानवायुर्गुदे मतः ॥ ८८ ॥ तथोदरे च जंघायां नाभिजानू रुषुस्थितः ॥ अस्य कर्म विसर्गः स्यान्मुने मूत्रपुरीषयोः ॥ ८९ ॥ श्रोत्राक्षिगुल्फकट्यां च घ्राणे व्यानश्च कीर्त्तितः ॥ प्राणापानधृतित्यागग्रहणाद्यस्य कर्म च ॥९०॥ समानो व्यानानिलयं शरीरं वह्निना सह ॥ द्विसप्ततिसहस्राणि नाडीरंध्राणि नारद ॥९१॥ तेषु वै संचरन्वायुर्देहपुष्टिं करोति वै ॥ पादयोर्हस्तयोः संधावुदानस्तस्य कर्म च ॥ ९२ ॥ देहत्रयेणोत्क्रमणे कीर्त्तितं तव नारद ॥ पंच नागादयो धातून्प्राणानाश्रित्य सर्वदा ॥ ९३ ॥ निमेषोद्गारछिक्कादितंद्राशोभादिकर्म च ॥ घ्राणेंद्रियं तथा भूमेर्गंधाद्याः स्थैर्यधैर्यकौ ॥ ९४ ॥ गौरवं श्मश्रुकेशाश्च नखदंताश्च कीकसम् ॥ वातादिधातुप्रकृतिर्व्योमादिप्रकृतिस्तथा ॥ ९५ ॥ अद्भ्यस्तु रसनं शैत्यं स्वेदमूत्रादि मार्दवम् ॥ तेजसो लोचनं रूपं पित्तं पाकः प्रकाशता ॥ ९६ ॥ ओजस्तेजस्तथा शौर्यं मेधावित्वं तथोष्मता ॥ सप्तप्रकारा देवर्षे सात्विको देवविग्रहः ॥ ९७॥ ब्रह्मेंद्रयमकौबेरगंधर्ववारुणार्थिकः ॥ षड्विधो राजसः ख्यातः पैशाचो राक्षसासुरौ ॥९८॥ शाकुनः सार्पप्रेताख्यो विग्रहः परिकीर्त्तितः ॥ त्रिविधस्तामसो मात्स्योंघ्रिपाचैव शवाकृतिः ॥ ९९ ॥ षडंगानि तु पिंडस्य शिरः पादौ करौ कटिः ॥ प्रत्यंगानि च वक्ष्यंते त्वचः सप्तकुलस्तथा ॥ १०० ॥ छन्नाः कोशाग्निभिर्विप्र स्नायुश्लेष्मजरायुभिः ॥ सीमाभूताश्च धातूनां वा धातूनंतरेषु च ॥ १०१ ॥ काष्टसारोपमा विप्र प्रोक्ता ह्येते मदादिभिः ॥ प्रथमो मांससंघर्षस्तासां धमनयः शिराः ॥ १०२ ॥ स्नायुः स्रोतांसि रोहंति पंकपंकजकंदवत् ॥ [illegible] ॥ १०३ ॥ धातवः सप्त प्रोक्ताश्च त्वगसृङ्मांसमेदकाः ॥

अस्थीनि मज्जा शुक्रं च सर्वविग्रहसंस्थिताः ॥ १०४ ॥ उत्पत्तिमेषां वक्ष्यामि शृणु नारद तन्मनाः ॥ जाठरेणाग्निना पक्वाद्भवेदन्नरसा
न्मुने ॥ १०५ ॥ त्वग्रक्तं चैव रक्ताद्यैः पक्वैः शोकाग्निना ततः ॥ जन्यंते धातवः सर्वे आश्रयानपि मे शृणु ॥ १०६ ॥ रक्ताश्रयस्तथा
श्लेष्माशयः पित्ताशयः परः ॥ आमाशयस्तथा पक्वाशयो बाह्याशयो मतः ॥ १०७ ॥ मूत्राशया इति सप्त प्रोक्तास्ते विप्र भक्तितः ॥
पित्तपक्वाशयांते वै स्त्रीणां गर्भाशयोऽष्टमः ॥ १०८ ॥ कफासृग्भ्यां प्रसन्नाभ्यां हृदयं कमलाकृति ॥ सुषिरं स्यादधोवक्त्रं यकृत्प्लीहांतर
स्थितम् ॥१०९॥ इदं वै बुद्धिसंस्थानं वर्त्तते मुनिवंदित ॥ एतद्यथा तमो व्याप्तं निमीलति स्वपित्यपि ॥ ११० ॥ यदा विकाशते तद्वै
तदात्मा जागरूपकः ॥ स्वप्नश्चैव सुषुप्तिश्च ताभ्यां द्वेधेंद्रियाणि चेत् ॥ १११ ॥ स्वापस्तदा महाभाग बाह्यानीमानि नारद ॥ लीयते
हृदि जागर्त्ति चित्तं स्वप्नस्तदोच्यते ॥ ११२ ॥ यदा त्विलीयते प्राणैर्मनश्चेत्सा सुषुप्तिका ॥ नव स्रोतांसि देहेषु श्रवणे नयने तथा ॥
॥ ११३ ॥ नासे च वदनं चैव तदा द्वे गुदशेफसी ॥ तानि स्युर्मलवाहानि बहिः सर्ववपुष्मताम् ॥ ११४ ॥ स्तनयोर्द्वे भगे चैव स्त्रीणां
त्रीण्यधिकानि तु ॥ जालानि षोडशोक्तानि देहस्थानि महामुने ॥ ११५ ॥ कूर्चाः षट् करयोरंघ्र्योः स्कंधे मेढ्रे मयेरिताः ॥ मांसरज्जु
चतुष्कं च पार्श्वयोः पृष्ठवंशके ॥११६॥ शिरसि पंचमोवंत्यो द्वे जिह्वे लिंगयोस्तथा ॥ विख्याता राशयोस्थ्नां वै दश चाष्टौ तपोनिधे ॥
॥ ११७ ॥ पंचधास्थीनि वर्त्तन्ते वलयादिकभेदतः ॥ अस्थ्नां शतानि वै त्रीणि वर्त्तते सर्वदेहके ॥ दशोत्तरं महाभाग द्विशतं त्वस्थि
संधयः ॥ ११८ ॥ प्रतराःस्तेनसेवंताः कोरकाश्च तथोखलाः ॥ शंखावर्त्ता मंडलाश्च सामुद्रास्तुंडकास्तथा ॥ ११९ ॥ अष्टप्रकाराश्चो
दिष्टा अस्थिसंधिमुखा मुने ॥ पेशीस्नायुशिरासंधि त्रिसहस्रं प्रकीर्त्तितम् ॥१२०॥ चतुर्द्धा स्नायवोप्यन्ये शतानि स्नायवः परे ॥ सुषिराः
कुंदुराः पृथ्वप्रतानादिप्रभेदतः ॥ १२१ ॥ स्नायुबद्धं वपुः प्रोक्तं भूरिभारक्षमं भवेत् ॥ नौर्यथा बंधनैर्बद्धा भूरिभारक्षमा भवेत् ॥१२२॥
पेशीशतानि वै पंच स्त्रीणां विंशाधिका मताः ॥ स्तनयोर्दश लक्ष्यंते यौवने दश वै भगे ॥ १२३ ॥ अंतर्द्वे प्रसृतो बाह्ये तिस्रो वै गर्भ
मार्गगाः ॥ शंखनाभ्याकृतिर्योनिस्त्र्यावर्त्या तृतीयके ॥ १२४ ॥ तस्मिन्नावर्तके विप्र गर्भशय्याच संस्थिता ॥ रोहितास्या तत्र पेशी

शुक्रजीवनिका मता ॥ १२५ ॥ आर्त्तवे शुक्रपेशिन्यस्तिस्रः प्रस्थाविका मुने ॥ एकोनत्रिंशल्लक्षाणि सार्द्धानि शत नंदकम् ॥ १२६ ॥ षट्पंचाशच्च वै प्रोक्ताः शिरा धमनयो मुने ॥ दश नाड्यस्तु तासां वै मूलभूताः कलेवरे ॥ १२७ ॥ द्व्यंगुलं वांगुलदलं यवं यवदलं तथा ॥ गत्या द्रुमदलस्यैव वनयः प्रतता यदा ॥ १२८ ॥ तास्तदा सप्त भिद्यंते शतानि हि तपोनिधे ॥ द्वे जिह्वे संस्थिते वाक्यरसज्ञानस्य कारणे ॥ १२९ ॥ घ्राणेंद्रिये तथा द्वे वै गंधहेतुर्दृशोर्द्वयम् ॥ निमेषोन्मेषकृच्छ्रोत्रे शब्दग्राहि द्वयं भवेत् ॥ १३० ॥ नाड्यो रसवहाः प्रोक्ता विंशतिः परिसंख्यया ॥ तैरसैर्वर्द्धते देहो देहिनां तपसोनिधे ॥ १३१ ॥ नाभ्यां प्रतिस्थिता ह्येता नाड्यः सर्वमुनिस्तुत ॥ ऊर्ध्वं दश तथाधस्थाच्चतस्रास्तिर्यगायताः ॥ १३२ ॥ ऊर्द्ध्वगा हृदयं प्राप्ताः प्रतीयंते पृथक् कृताः ॥ वातपित्तकफान् रक्तं रसं द्वे द्वे विमुंचतः ॥ १३३ ॥ शब्दरूपरसादीन्वै मुने तत्रावगच्छतः ॥ द्वे द्वे च भाषणं घोषं स्वापं रोधं च रोदनम् ॥ १३४ ॥ शुक्रं न्यस्तं तु स्रवतः स्त्रियां द्वे मुनिसत्तम ॥ पक्काशयस्थितास्त्रेधा पृथक्ताश्च ह्यधोमुखाः ॥ १३५ ॥ प्रवर्त्तयंति तत्राद्या दश वातादि पूर्ववत् ॥ द्वे धमन्यो महाभाग भुक्तमन्नं जलं यथा ॥ १३६ ॥ मूत्रं मलं प्रकुरुतो वहतोत्र समाश्रयान् ॥ मुंचतश्चार्त्तवं स्त्रीणां द्वे शक्रुद्विंशतेंत्रके ॥ १३७ ॥ स्वेदं सपर्ययं त्वष्टौ रोमकूपमुखा मताः ॥ प्रवेशयंति चैवांतो रसानभ्यंगसंभवान् ॥ १३८ ॥ सप्तोत्तरशतं मर्म्मस्थानानि मुनि पुंगव ॥ त्रिकोटिश्चैव पंचाशन्नियुतानि महामुने ॥ १३९ ॥ रोमकूपाश्च श्मश्रूणि केशाश्चैव त्रिलक्षकाः ॥ मानं जलादेर्वक्ष्यामि शृणु नारद कथ्यते ॥ १४० ॥ दशांजलिमितं तोयं रसस्यांजलयो नव ॥ शोणितस्याष्टांजलयो विष्ठायाः सप्त चोदिताः ॥ १४१ ॥ श्लेष्मणः षट् समाख्याताः पित्तस्यांजलयो नव ॥ त्रयो मूत्रस्यांजलयो वसाया मेदसो द्वयम् ॥ १४२ ॥ एकांजलिसमा मज्जा शिरोमज्जा तदर्द्धतः ॥ श्लेष्मसारो बलं त्वर्द्धं समासेनेरितं मया ॥ १४३ ॥ एषामेव विरोधेन ह्रासवृद्ध्या तथैव च ॥ जायंते च तथा रोगाः शरीरे सर्वदेहिनाम् ॥ १४४ ॥ योगाभ्यासरतो यस्तु सर्वापथ्यविवर्जितः ॥ नादब्रह्म स जानाति त्रैलोक्यं सचराचरम् ॥ १४५ ॥ *इति प्रत्यंगगणनं*

संक्षेपात्तव कीर्तितम् ॥ सर्वमेव शरीरस्थमन्वेष्यं योगतत्परैः ॥ १४६ ॥ इति श्रीस्कांदे केदारखण्डे कैलासप्रशंसायां रुद्रतीर्थे पिंडोत्पत्तिर्नाम पञ्चषष्टि तमोऽध्यायः ॥ ६५ ॥ ॥ नारद उवाच ॥ ॥ धन्योऽस्मि नाथ देवेश श्रोतास्मि तव भारतीम् ॥ कथमस्मिन् शरीरे वै त्रैलोक्यं सर्वमंदिरम् ॥ १ ॥ कथं वै ज्ञायते देव पिंडस्थं सार्वभौतिकम् ॥ कृपया वद चैतन्मे शृण्वतो नास्ति मे श्रमः ॥ २ ॥ ईश्वर उवाच ॥ साधु साधु महाभाग पिंडस्थं ज्ञानकारणम् ॥ शृणु मे वदतो भक्त्या समाधाय मनश्चलम् ॥ ३ ॥ शृणु देहस्थचक्राणि विज्ञाय मुक्तिभाग्भवेत् गुदलिंगांतरे विप्र चक्रमाधारसंज्ञितम् ॥ ४ ॥ चतुर्दलं समाख्यातं गणेशस्तत्र देवता ॥ तस्येशानदले विप्र परमानंदसंस्थितिः ॥ ५ ॥ तदाग्नेये दले चैव सहजानंदसंस्थितिः ॥ नैर्ऋत्ये च तथा पत्रे वीरानंदो वसत्यलम् ॥ ६ ॥ योगानंदस्तु वायव्ये पत्रे ह्याधारपंकजे ॥ अस्ति कुंडलिनी ब्रह्मन् ब्रह्मशक्तिस्तदम्बुजे ॥ ७ ॥ पीयूषदा सा सरला शक्तिराब्रह्मरंध्रकम् ॥ स्वाधिष्ठानं द्वितीयं वै षड्दलं चक्रमीरितम् ॥ ८ ॥ ब्रह्मादिदेवतास्तत्र स्वाधिष्ठानाम्बुजे मुने ॥ पूर्वादिषु दलेष्वेव फलान्येतान्यनुक्रमात् ॥ ९ ॥ प्रश्रयः क्रूरभावश्च वर्गनाशौ च मूर्च्छना ॥ अवज्ञा स्यादविश्वासः कामाशक्तेरिदं गृहम् ॥ १० ॥ मणिपूराभिधं चक्रं नाभौ तद्दशपत्रकम् ॥ सुषुप्तिका च तृष्णा च ईर्ष्या पैशून्यमे व च ॥ ११ ॥ ह्रीर्भयं च दया मोहो व्यवायश्च विषादिता ॥ क्रमेणैतास्तु पूर्वादौ पत्रे वै भुवनं तथा ॥ १२ ॥ अनाहतं चतुर्थं तु चक्रं हृदयवर्त्तितम् ॥ दलैर्द्वादशभिर्युक्तं पूजास्थानं ममप्रियम् ॥ १३ ॥ प्रणवस्य तदिच्छंति शृणु पूर्वादिपत्रके ॥ लौल्यं प्रणाशः कापटयं तर्कश्चाप्यनुतापिता ॥ १४ ॥ आशाप्रकाराश्चिता च समीहा समता मुने ॥ दंभो वैकल्पकं चैव विवेकोहंकृतिस्तथा ॥ १५ ॥ फलान्येतानि पूर्वादिपत्रेषु कमलस्य हि ॥ पंचमं भारतस्थानं विशुद्धं षोडशच्छदम् ॥ ॥ १६ ॥ कंठे स्थितं महाभाग तत्रैव प्रणवादयः ॥ प्रणवोद्गीतहुंफट् च वौषट् श्रौषट्वषट्स्वधा ॥ १७ ॥ स्वाहा नमोमृतं तत्र स्वराः षड्जादयोपि च ॥ इति पूर्वादिपत्रेषु फलान्यात्मनि षोडश ॥ १८ ॥ षष्ठं वै ललनाख्यं च घंटिकायां महाप्रभम् ॥ चक्रं द्वादशपत्रं वै मदो मानस्ततो मुने ॥ १९ ॥ स्नेहः शोकस्तथा खेदो लुब्धता रति संभ्रमः ॥ ऊर्म्मिः श्रद्धा ततस्तोषो विरोधश्चैव द्वादश ॥२०॥

फलानि ललनाचक्रे एतानि पूर्वकादिषु ॥ भ्रूमध्ये द्विदलं चक्रं सप्तमाख्यं महामुने ॥ २१ ॥ आज्ञाभिधं समाख्यातं मुक्तिदं योगिसत्तमैः ॥ त्रिगुणानां तथा भावास्तत्र पूर्वादिषु क्रमात् ॥ २२ ॥ ततोप्यस्ति मनश्चक्रं षड्दलं तत्फलानि तु ॥ स्वप्नो रसोपभोगश्च प्राणरूपोपलंभनम् ॥ २३ ॥ स्पर्शनं शब्दवादश्च दले पूर्वादिषु क्रमात् ॥ यच्चक्रं षोडशारं वै सोमचक्रं महाप्रभम् ॥ २४ ॥ दलेषु षोडशस्वेव कलाः षोडश संस्थिताः ॥ कृपार्जवं तथा शांतिधैर्यं वैराग्यसंधृतिः ॥ २५ ॥ संमदाहाररोपाश्च निचयो ध्यानमेव च ॥ स्थिरता चैव गांभीर्य्यमुद्यमः सत्वदानि तु ॥ २६ ॥ एकाग्रता फलानि स्युः क्रमात्पूर्वादिपत्रके ॥ सहस्रारं तथा चक्रं ब्रह्मरंध्रेतिनिर्मलम् ॥ ॥ २७ ॥ सुधा संस्रवते तस्मादभि वर्द्धयते तनुः ॥ अनाहते दले पूर्वे ह्यष्टमैकादशे तथा ॥ २८ ॥ द्वादशे च तथा पत्रे जीवो गीतादिसिद्धिदः ॥ चतुर्थे दशमे षष्ठे जीवो गीतविनाशकः ॥ २९ ॥ विशुद्धान्यष्टमादीनि दलान्यष्टौ तु यानि तु ॥ दद्युर्गानादिसंसिद्धिं यदि जीवोत्र संस्थितः ॥ ३० ॥ षोडशे तु दले जीवो गीतनाशनकारकः ॥ ललनायां च दशमे चैकयुक्ते च पत्रके ॥ ३१ ॥ जीवो गीतस्य संसिद्धौ तुर्य्ये प्रथमपंचमे ॥ नाशकस्तु तदा ख्यातो जीवो जीवविदात्मभिः ॥ ३२ ॥ यदा तु ब्रह्मरंध्रस्थो जीवात्मा सुधयाप्लुतः ॥ तुष्टो गीतादिकार्य्याणि सप्रकर्षाणि साधयेत् ॥ ३३ ॥ एषामन्यतमे स्थाने चक्रेष्वन्येषु जीवकः ॥ न कदाचिन्महाभाग गीतसंसिद्धिमाप्नुयात् ॥ ३४ ॥ आधाराद्व्यंगुलादूर्ध्वं हेमनाड्यंगुलादधः ॥ एकांगुलप्रमाणं च देहस्थं ज्योतिरीश्वरम् ॥ ३५ ॥ तप्तस्वर्णसमाभासं परमं सिद्धिकारणम् ॥ तस्मिन्नेव महाभाग तन्वी वह्नेः शिखास्ति वै ॥ ३६ ॥ तस्मान्नवांगुले पीठे पीठात्मा वै समास्थितः ॥ उत्सेधायां देहकंदो ताभ्यां तु चतुरंगुलम् ॥ ३७ ॥ नाभिचक्रं तु तन्मध्ये द्वादशारं महाप्रभम् ॥ तंतुजाले यथा लूता तथात्र भ्रमते प्रभुः ॥ ३८ ॥ प्राणारूढस्तथा जीवो ब्रह्मरंध्रं सुषुम्णया ॥ आरोहावरोहौ कुरुते रज्वां वै नटको यथा ॥ ३९ ॥ क्रोडीकृत्य स्थिता नाड्यः सुषुम्णां परितो भृशम् ॥ कंदादिब्रह्मरंध्रांतं कंदे शाखाभिरीरिता ॥ ४० ॥ तन्तुवैं तन्यते विप्र बह्वयस्ताः संति नारद ॥ चतुर्दश महाभाग मुख्याः प्रोक्ता मदादिभिः ॥ ४१ ॥ इडा वै पिंगला चैव सुषुम्णा च तथा कुहूः ॥ सरस्वती च गांधारी हस्तिजिह्वा च वारणा ॥ ४२ ॥ यश

स्विनी शंखिनी च पूषा विश्वोदरा तथा ॥ पयस्विनी तथालंबुषेति नाड्यश्चतुर्दश ॥ ४३ ॥ तिस्रो मुख्यतमाः ख्यातास्तासामाद्या सुषुम्णिका ॥ वैष्णवी सा मया प्रोक्ता मुक्तिमार्गस्थिता सदा ॥ ४४ ॥ कंदमध्ये महाभाग संस्थिता सा तपोनिधे ॥ इडा सव्ये स्थिरा तस्य दक्षिणे पिंगला मता ॥ ४५ ॥ इडापिंगलयोर्मध्ये चरन्तौ चन्द्रभास्करौ ॥ कालहेतू क्रमात्प्रोक्तौ सुषुम्णा कालशोषिणी ॥४६॥ सुषुम्णापार्श्वयोश्चैव वर्त्तेते द्वे शृणु प्रिये ॥ सरस्वती कुहूश्चैव योगमार्गप्रदे शुभे ॥ ४७ ॥ इडायाः पृष्ठपूर्वस्थे गांधारीहस्तिजिह्वके ॥ पिंगला पूर्वपृष्ठे वै वारणा च पयस्विनी ॥ ४८ ॥ कुह्वाश्च हस्तिजिह्वाया मध्ये विश्वोदरा मता ॥ वारणा संस्थिता मध्ये नाड्यो वै ब्रह्मवंदित ॥ ४९ ॥ ते वै कुहूयशस्विन्यौ तथा पूषा सरस्वती ॥ तयोर्मध्यस्थिता शेते नाम्ना नाडी पयस्विनी ॥ ५० ॥ गांधारिका सरस्वत्योर्मध्यदेशे च शंखिनी ॥ इडा च पिंगला चैवालंबुषा कंदमास्थिताः ॥ ५१ ॥ सव्यापसव्या नासांतं कुहूरामेढ्रकं पुरः ॥ ऊर्ध्वं माजिह्वकं चास्ते नाम्ना नाडी सरस्वती ॥ ५२ ॥ गांधारी पृष्ठतः प्रोक्ता वामनेत्रं तथा मुने ॥ आसव्यपादं सांगुष्ठं संस्थिता च तपोधन ॥ ५३ ॥ सर्वत्रगा हस्तिजिह्वा वारणाथ पयस्विनी ॥ देहेखिले तथांगुष्ठाद्दक्षिणांघ्रिसमाश्रितात् ॥ ५४ ॥ विश्वोदरा महाभाग शंखिन्या सव्यकर्णकम् ॥ पूषा पाय्वान्वनेत्रान्ता तथा दक्षिणकर्णकम् ॥ ५५ ॥ पयस्विनी तु विनतालंबुषा पायुमूलकम् ॥ समालंब्य स्थिता ब्रह्मन्संक्षेपात्ते मयोदितम् ॥ ५६ ॥ अस्मिन्नेव महाभाग देहे मलपलान्विते ॥ बुद्धिमंतो भवापायं मोक्षं संसाधयंति वै ॥५७॥ उपायाद्गुरुवक्त्राच्च श्रुत्वा सेवादिभिर्मुने ॥ अस्मादेवाखिलं तत्त्वं प्राप्यते भुक्तिमुक्तिके ॥५८॥ तस्मात्सर्वप्रयत्नेन देहं संसाधयेत्पुमान् ॥ ॥ ५९ ॥ निर्गुणस्तु परानन्दो रूपादिगुणवर्जितः ॥ पाणिपादाद्यवयवैर्हीनो नारायणो व्ययः ॥ ६० ॥ ध्यातुं तु न शक्यते कैश्चिद्र सिद्धादिभिरप्ययम् ॥ तस्मात्तच्चरितं ज्ञेयं भुक्तिमुक्त्यैकलालसैः ॥ ६१ ॥ धन्यस्त्वं यस्य गेये वै बुद्धिरस्ति सुनिर्मला ॥ योगमार्गेण संसाध्य देहं मलसमाहतम् ॥ ६२ ॥ नादब्रह्मरतो भूयात्परां सिद्धिमवाप्नुयात् ॥ नाहं योगशतैस्तुष्टो नाहं तीर्थविमज्जनात् ॥ यथाहं गीतसंतुष्टो ददामि परमां गतिम् ॥ ६३ ॥ अनाहतस्य नादस्य जनिर्देहविशोधनात् ॥ तस्मात्सर्वप्रयत्नेन देहं संशोधयेत्पुरा ॥ ६४ ॥

इति श्रीस्कांदे केदारखंडे कैलासप्रशंसायां रुद्रतीर्थे रागोत्पत्तौ देह शोधनं नाम षट्षष्ठितमोऽध्यायः ॥ ६६ ॥

॥ नारद उवाच ॥ ॥ नादः कथं समुद्भूतो देहादस्मान्मलाश्रयात् ॥ नादः कोयं समाख्यातः कातिधा वर्त्तते परः ॥ १ ॥ एतत्सर्वं
समासेन कथय त्वं महेश्वर ॥ भक्तोपकारे प्रभवो नालस्यं कुर्वते प्रभो ॥ २ ॥ ईश्वर उवाच ॥ शृणु नारद तत्त्वेन यथा नादो विधी
यते ॥ नाद एव परं ब्रह्म नास्मात्किंचित्परात्परम् ॥ ३ ॥ ब्रह्मा नादोपसेवाभिर्जगत्सर्वं चकार ह ॥ विष्णुर्वै पालने शक्तो ह्यस्मि
नाशने तथा ॥ ४ ॥ वयं सर्वे महाभाग नादोपासन तत्पराः ॥ न जानंति परं पारं ब्रह्माद्यास्त्रिदिवौकसः ॥ ५ ॥ अहमेव हि जानामि
नादब्रह्म समासतः ॥ नादोपासनया सर्वे सेविता देवतागणाः ॥ ६ ॥ आत्मारामः परं ज्योतिर्मनः प्रेरयति प्रभुः ॥ देहस्थोग्निर्महाभाग
स प्रेरयति मारुतम् ॥ ७ ॥ नाभिमूलस्थितो वायुः क्रमेणोर्ध्वपथे चरन् ॥ नाभितो हृदयं कंठं ततोर्ध्वास्ये प्रवर्त्तते ॥ ८ ॥ आविर्भावो
ध्वनेः पूर्वं ततः पंचविधो मतः ॥ अतिसूक्ष्मस्ततः सूक्ष्मः पुष्टोपुष्टश्च कृत्रिमः ॥ ९ ॥ नाभ्यादिस्थानसंस्थो वै पंचधा समुदीरितः ॥
प्राणो नकार आख्यात आकारो नलसंज्ञितः ॥ १० ॥ संयुक्तः प्राणवह्न्योश्च तेन नादस्तथा स्मृतः ॥ त्रिधासौ व्यवहारो वै मंद्रस्तार
स्तथा परः ॥ ११ ॥ घोरस्तृतीय आख्यातस्तेषां स्थानानि वै शृणु ॥ नाभिमध्ये स्थितो घोरो हृदये मंद्रको मतः ॥ १२ ॥ शिरो
गात्रे तथा तारस्त एव ग्रामनामकाः ॥ तस्य द्वाविंशतिर्भेदा नादस्य परमात्मनः ॥ १३ ॥ श्रुतयस्ते समाख्याताः श्रवणान्नारदेरिताः ॥
नाड्यो द्वाविंशतिर्विप्र स्थितास्तिर्यगधश्च ताः ॥ १४ ॥ वायुनैव हतास्ता वै श्रुतयः संभवंति हि ॥ प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमा
त्रकः ॥ १५ ॥ सा श्रुतिर्वै परिज्ञेया स्वरावयवलक्षणा ॥ श्रुतिभ्यस्तु स्वराः सप्त ताञ्छृणुष्व महामुने ॥ १६ ॥ प्रथमः षड्जको नाम
ऋषभस्तु द्वितीयकः ॥ गांधारस्तु तृतीयश्च चतुर्थो मध्यमः स्मृतः ॥ १७ ॥ पंचमः पंचमः प्रोक्तो षष्ठो धैवत उच्यते ॥ निषादः सप्तमः
प्रोक्तस्तंत्रीकंठोत्थिता इमे ॥ १८ ॥ तेषां नामानि वर्णाश्च सरिगमपधनी मताः ॥ श्रुत्यनंतर भावी यः स्निग्धोनुरणनात्मकः ॥ १९ ॥
स्वनो रंजयति श्रोतुश्चित्तं स स्वर उच्यते ॥ श्रुतिजातीः प्रवक्ष्यामि शृणु नारद तत्त्वतः ॥ २० ॥ दीप्ता तथायता चैव करुणा च तृती

यका ॥ मृदुर्मध्या तथा प्रोक्ताः पंच वै श्रुतिजातयः ॥ २१ ॥ आसां वै पंचजातीनां स्वरेष्वेव व्यवस्थितिः ॥ दीप्तायता मृदुर्मध्या

षड्जे च ऋषभे पुनः ॥ २२ ॥ संस्थिता करुणा मध्या मृदुर्गांधारके पुनः ॥ मध्यमे ते दीप्तयते मृदुमध्ये तथास्थिते ॥ २३ ॥ मृदुश्चैव तथा मध्या करुणामध्यमस्थिता ॥ धैवते करुणा मध्यायता च परमा स्थिता ॥ २४ ॥ दीप्ता जातीः प्रवक्ष्यामि शृणु तत्त्वेन नारद ॥ तीव्रा रौद्री वज्रिकोग्रा चतुर्द्धा दीप्तिका मता ॥ २५ ॥ आयतायास्तथा भेदाः पंच सन्ति शृणुष्व तान् ॥ कुमुद्वती च क्रोधा च तृतीया वै प्रसारिणी ॥ २६ ॥ तथा संदीपिनी प्रोक्ता रोहिणी पंचमी मता ॥ करुणायास्तथा भेदास्त्रयः प्रोक्ता मदादिभिः ॥ २७ ॥ दयावती तु प्रथमा लापिनी च द्वितीयका ॥ मंदंतिका तृतीया स्यान्मृदोर्भेदचतुष्टयम् ॥ २८ ॥ मंदा रतिस्तथा प्रीतिः क्षितिश्चैव चतुर्थिका ॥ मध्या भेदास्तु षट् प्रोक्ता रंजिनी मार्जनी तथा ॥ २९ ॥ छंदोवती रक्तिका च रम्या च क्षोभिणी मता ॥ स्वरस्थितिं प्रवक्ष्यामि तासां नारद तच्छृणु ॥ ३० ॥ मंदा छंदोवती तीव्रा षड्जे चैव कुमुद्वती ॥ रतिर्दयावती चैव रंजिनी चर्षभे मता ॥ ३१ ॥ क्रोधा रौद्री च गांधारी मध्यमे वज्रिका तथा ॥ प्रसारिणी च प्रीतिश्च मार्जनीत्येवमाश्रिताः ॥ ३२ ॥ संदीपिनी च रिक्ता च क्षितिरालापिनी तथा ॥ पंचमे संस्थिता ह्येता मदंती रोहिणी तथा ॥ ३३ ॥ रम्या चैव तथा विप्र धैवते संस्थिता मताः ॥ उग्रा च क्षोभिणीति द्वे निषादे संस्थिते श्रुती ॥ ३४ ॥ घोराख्यमंद्रताराणां स्थानभेदात्त्रिधा स्वराः ॥ एवं ते विकृतावस्था द्वादश प्रतिपादिताः ॥ ३५ ॥ विकृतस्तु तथा षड्जे अच्युतच्युतभेदतः ॥ द्वि श्रुतिः षड्जको विप्र शृणु चान्यच्च वैकृतिम् ॥ ३६ ॥ काकली त्वे निषादस्य तथा वै श्रुतयोन्तरे ॥ सा धारणा श्रुतिः षाड्जी संश्रितश्चर्षभो यदा ॥ ३७ ॥ चतुःश्रुतिमवाप्नोति विकृतस्त्वेकको मतः ॥ तस्मिन्नेव यदा विप्र तिस्रो वै श्रुतयोन्तरे ॥ ३८ ॥ पुनश्चतुःश्रुतिश्चांते गांधारो भेदकः स्मृतः ॥ आसां धारणसंस्थानान्मध्योन्तः षड्जवद्द्विधा ॥ ३९ ॥ घोरग्रामे पंचमस्तु त्रिः श्रुतिः कौशिके पुनः ॥ संप्राप्य मध्यमश्रुतिं द्विधेति च चतुःश्रुतिः ॥ ४० ॥ घोरग्रामे धैवतस्तु विकृतः स्याच्चतुःश्रुतिः ॥ निषादस्त्रिचतुःश्रोतः काकलीत्वेन कौशिके ॥ ४१ ॥ तदा द्वौ विकृतौ भेदौ प्राप्नोति द्वादश स्मृताः ॥ सार्द्धं शुद्धैः सप्तभिस्ते दश चैव नव स्मृताः ॥ ४२ ॥ मयूरा ब्रुवते षड्जं चातकश्चर्षभं तथा ॥ गांधारं वर्करो ब्रूते क्रौंचः क्वणति मध्यमम् ॥ ४३ ॥ कोकिलः पंचमं ब्रूते दर्दुरो

धैवतं मुने ॥ गजा निषादं ब्रुवते इति ज्ञेयं विचक्षणैः ॥ ४४ ॥ पुनश्चतुर्विधः प्रोक्तो मुने वाद्यादिभेदतः ॥ वादी विवादी संवादी ह्यनु
वादी प्रभेदतः ॥ ४५ ॥ प्रयोगे बहुलो वादी श्रुतयो वायुगोचराः ॥ संवादी च विवादी च मिथः संवादिनौ यदा ॥ ४६ ॥ संवादित्वं
विवादित्वं स्यात्तयोर्वै पृथक्पृथक् ॥ शेषाणामनुवादित्वं राजा वादी च गीयते ॥ ४७ ॥ अनुसारित्वात्तु संवादी तथामात्यो विधीयते ॥
वृन्दारककुलोद्भूताः षड्जगांधारमध्यमाः ॥ ४८ ॥ पितृजः पंचमः प्रोक्तो ऋषौ मुनिकुलोद्भवौ ॥ निषादस्त्वासुरः प्रोक्तः षड्जमध्य
मपंचमाः ॥ ४९ ॥ ब्राह्मणास्ते समाख्याता ऋधौ तु क्षत्रियौ स्मृतौ ॥ गांधारश्च निषादश्च वैश्यजातिसमुद्भवौ ॥ ५० ॥ शूद्रावंतरका
कल्यौ तेषां रूपाण्यथो शृणु ॥ षड्जो भस्मसमाभासो रिश्च पिंजरमूर्त्तिमान् ॥ ५१ ॥ गांधारः स्वर्णवर्णाभो मध्यमः कुंदमूर्त्तिमान् ॥
पंचमः श्वेतवर्णश्च धैवतः पीतवर्णकः ॥ कर्बुरस्तु निषादो वै जन्मभूमिं तथा शृणु ॥ ५२ ॥ जम्बुद्वीपभवः षड्जो ऋषभः शाकसंभवः ॥
कुशद्वीपभवो गश्च मध्यमः क्रौंचद्वीपजः ॥ ५३ ॥ पंचमः शाल्मलौ जातः श्वेतजो धैवतः स्मृतः ॥ निषादः पुष्करे जातो देवताः शृणु
नारद ॥ ५४ ॥ वह्निः को वै भारती चाऽहं विष्णुर्गणपो रविः ॥ क्रमादेते षड्जादीशाश्छन्दांसि शृणु नारद ॥ ५५ ॥ क्रमादनुष्टुब् गा
यत्री त्रिष्टुप् च बृहती तथा ॥ पङ्क्तिरुष्णिक् च जगती षड्जादीनां महामुने ॥ ५६ ॥ सरीवीरेऽद्भुते रौद्रे धो बीभत्से भयानके ॥ का
र्य्यौ गनी तु करणे हास्यशृंगारयोर्मगौ ॥ ५७ ॥ इति श्रीस्कांदे केदारखंडे कैलासप्रशंसायां रुद्रतीर्थे नादश्रुतिभेदाख्यानं नाम सप्तष
ष्टितमोऽध्यायः ॥ ६७ ॥ ॥ ईश्वर उवाच ॥ ॥ संक्षेपतो ग्रामभेदान्प्रवक्ष्यामि शृणुष्व तान् ॥ स्वरसंदोहको ग्रामो यत्र मूर्च्छादिसं
स्थितिः ॥ १ ॥ गातव्यौ द्वौ धरायां हि षड्जमध्यमसंज्ञितौ ॥ गांधारग्रामकः स्वर्गे गातव्यो भवदादिभिः ॥ २ ॥ ग्रामाणां देवता
ब्रह्मा विष्णुश्चाहं यथाक्रमात् ॥ हेमंते च तथा ग्रीष्मे वर्षायां ते यथाक्रमम् ॥ ३ ॥ प्रातर्मध्यापराह्णेषु गातव्याः शिवमिच्छता ॥ तथा
सप्तस्वराणां च ह्यारोहश्चावरोहणम् ॥ ४ ॥ मूर्च्छनास्ताः समाख्याताः संख्यया चैकविंशतिः ॥ ग्रामद्वये महाभाग चतुर्दश समीरिताः ॥
॥ ५ ॥ षड्जग्रामे तु मूर्च्छानां देवताः शृणु नारद ॥ [illegible] ॥ ६ ॥ नामानि शृणु तेषां हि मूर्च्छनानां

यथा क्रमम् ॥ निरुद्गता च कांता च सौवेरी ह्रष्यती तथा ॥ ७ ॥ उत्तरा चायता षष्ठी रजनी सप्तमी मता ॥ मध्यमे मूर्च्छनाश्चैव व्या
पिनी चंद्रिका मता ॥ ८ ॥ हेमा कपर्दिनी मैत्री तथा चांद्रवती मुने ॥ पित्र्या वै सप्तमी ख्याता गांधारे शृणु नारद ॥ ९ ॥ नंदा वि
शाला सुमुखी चित्रा चित्रवती सुखा ॥ आलापा चेति सप्त स्युर्मूर्च्छना वै तृतीयके ॥ १० ॥ ताना एकोनपंचाशत्त्रिग्रामे शृणु तान्मुने ॥
शुद्धाः स्युर्मूर्च्छनास्तानाः षाढवौडवनामकाः ॥ ११ ॥ षड्जे निषादहीनाश्च क्रमाद्धारिपनैस्तु ते ॥ सरिगेभ्यो विहीनाश्च मध्यमेष्टौ च
विंशतिः ॥ १२ ॥ क्रमात्सप्त यदा तानास्तदा चैकोनविंशतिः ॥ षाडवाभिर्युता विप्र चत्त्वारिंशन्नैवव ते ॥ १३ ॥ द्विश्रुतिभ्यां सश्यप
श्यधारिभ्यां सत्ववर्जिताः ॥ पृथक्तानाः प्रथमके औडवास्त्वेकविंशतिः ॥ १४ ॥ ऋषभाभ्यां च द्विश्रुत्या मध्यमे ग्रामसंस्थिताः ॥ चतु
र्दशैव हीनाः स्युः पंचत्रिंशच्च संख्यया ॥ १५ ॥ षाडवा औडवाश्चैवाशीतिश्च चतुरश्च ते ॥ कूटतानास्त्वसंपूर्णा व्युत्क्रमोच्चरितास्तथा ॥
॥ १६ ॥ संपूर्णाश्चयथाविप्र संख्यानं शृणु नारद ॥ चत्वारिंशत्तथा पञ्चसहस्राणि महामुने ॥ १७ ॥ संपूर्णाश्च तथा ख्याताः कूटतानाः
क्रमात्तथा ॥ एकैकस्यां मूर्च्छनायां षट्पंचाशत्तथेरिताः ॥ १८ ॥ नेत्रलक्षनेत्रनागसहस्राण्यक्षिणी तथा ॥ खयुगाश्च तथा ख्याता ह्यपू
र्णान् शृणु नारद ॥ १९ ॥ विंशतिः षाडवानां तु तथा सप्तशतानि तु ॥ विंशोत्तरं शतं चैव ह्यौडवानां विधीयते ॥ २० ॥ चतुःस्वराणां
कूटानां युगनेत्रमितिर्मता ॥ रसनेत्रस्वरौ चैव त्रिः स्वराश्चैकक: स्वरः ॥ २१ ॥ आर्चिकः प्रथमः ख्यातो गाथिकः सामिकस्तथा ॥
स्वरीमकश्चतुर्थश्च नामान्येषां क्रमान्मुने ॥ २२ ॥ युक्तौ निषादगांधारौ तत्र शुद्धादिभेदतः ॥ चतुर्विधाः प्रजायंते तयोरेकैकहानितः ॥
॥ २३ ॥ षाद्यौ माद्यौ तु चत्वारो द्विविधौ द्विविधौ यतः ॥ अन्ये दश तथा चाद्यौ चतुर्द्धा च यथाक्रमात् ॥ २४ ॥ चत्वारिंशच्च
तथा विंशतिः खखसप्तकम् ॥ शतं च गुणिताः सर्वे षाडवानां तथा मितिः ॥ २५ ॥ सहस्राणां चतुस्त्रिंशत्षष्टिः पंचशतानि च ॥ सर्वौ
डवानां संख्यानं शृणु नारद कृत्स्नशः ॥ २६ ॥ मध्याद्यौ धैवताद्यौ च भेदाश्चत्वार एव च ॥ षडौडवा द्विवेत्येवमुक्तपूर्वप्रभेदतः ॥
॥ २७ ॥ अष्टावंत्यादिमे विप्र चत्वारिंशत्सप्तविंशतिः ॥ शतं च गुणितं तैश्च तथा गजशतानि वै ॥ २८ ॥ पंचस्वरेषु संख्या स्यान्मुने

कृतसहस्रकम् ॥ चतुर्द्धाद्यौ तथा नाद्यौ द्वादश प्रथमे मताः ॥ २९ ॥ गुणिता युगनेत्राख्यैर्द्वात्रिंशद्वै महामुने ॥ संख्याश्चतुःस्वरे चोक्ता
स्त्रिस्वरेषु तथा शृणु ॥ ३० ॥ माद्यौ चतुर्द्धा भेदौ द्वौ परे नेत्रेंदुसम्मिताः ॥ ते वै द्विधेयं षट्त्रिंशत् षड्भिस्ते गुणितास्ततः ॥ ३१ ॥
द्विस्वरेषु द्विधा विप्र रिगधेत्यादयोष्टकम् ॥ शुद्धाः स्युर्द्वाविंशतिरब्ध्यब्धिगुणिता मुने ॥ ३२ ॥ एकस्वरादिभेदत्वान्मूलभूताश्चतुर्दश ॥
ते षड्जशुद्धमध्यायपंचकं भिदिकं विना ॥ ३३ ॥ सर्वेष्टचत्वारिंशद्वै ज्ञातास्त्रिस्वरकेषु वै ॥ द्वादश द्विस्वरे प्रोक्ता द्वयमेकैककस्वरे ॥३४॥
त्रिषष्टिरुत्तरैर्मंद्रैस्ताना मार्गीभवाः पुनः ॥ शराः स्वराश्च चत्वारस्तत्तानानां चतुःशतम् ॥ ३५ ॥ स्वराधिकाः स्वरांस्तद्वत्तथा षण्णव
तिस्तथा ॥ द्वादश त्रिस्वरद्वंद्वे चत्वारो द्विस्वरे द्वये ॥ ३६ ॥ एकैकस्वरतानानां भवेत्पंचशतीत्वियम् ॥ एष तूद्देशतः प्रोक्तो विस्तरो
मूर्च्छनादिकः ॥ ३७ ॥ नामानि शुद्धतानानां शृणु नारद सांप्रतम् ॥ अग्निष्टोमस्तथात्यग्निष्टोमो वै वाजपेयकः ॥ ३८ ॥ षोडशः
पुण्डरीकोश्वमेधो वै राजसूयकः ॥ सहीनानां महाभाग सप्त नामान्यनुक्रमात् ॥ ३९ ॥ स्विष्टकृद्बहुवर्णश्च गोसवश्च महाव्रतः ॥ विश्वजि
द्ब्रह्मयज्ञश्च प्राजापत्यश्च सप्तमः ॥ ४० ॥ नामानि रिविहीनानां तानानां स्युर्यथाक्रमम् ॥ अश्वक्रांतो रथक्रांतो विष्णुक्रांतो महामुने ॥
॥ ४१ ॥ सूर्य्यक्रांतो गजक्रांतो बलभिन्नागयक्षकौ ॥ पहीनानां यथा संज्ञाश्चोक्ता नारद ते मया ॥ ४२ ॥ चातुर्मास्योथ संस्थश्च शा
स्त्रमैक्यश्चतुर्थकः ॥ सौत्रामणिस्तथा चित्रो मदः सप्तम एव च ॥ इति नामानि संख्या च कथिता ते द्विजोत्तम ॥४३॥ इति श्रीस्कांदे
केदारखण्डे कैलासप्रशंसायां रुद्रतीर्थे संगीतशास्त्रे ग्रामादिभेदकथनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ छ ॥
॥ ईश्वर उवाच ॥ ॥ मध्यमग्रामसंबद्धान्षाडवान् शृणु नारद ॥ सावित्री चार्द्धसावित्री सर्वतोभद्रकस्तथा ॥ १ ॥ रव्यायनो गवायश्च
तथा सर्वायनः स्मृतः ॥ कौडपायननामा च सहीनानां तथा विधा ॥ २ ॥ अग्निजिह्वो दशाहश्च ततः पांशुः कलाधरः ॥ अश्वप्रतिग्रहो
बर्हिस्तथात्युदयसंज्ञकः ॥ ३ ॥ नामानि रिविहीनानां कथितानि महामते ॥ सर्वस्वदक्षिणश्चैव दीक्षाख्यो ग्लौः समित्तथा ॥ ४ ॥ स्वा

हाकारस्तनूपाच गोदोहश्चैव सप्तमः ॥ गहीनानां महाभाग संख्योक्ता ह्येकविंशतिः ॥ ५ ॥ इति श्रीस्कांदे केदारखण्डे संगीतशास्त्रे मध्यमग्रामौडकथनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ ईश्वर उवाच ॥ ॥ षड्जग्रामे महाभाग ह्यौडवान् शृणु तत्परः ॥ इडा पुरुषमेधश्च श्येनो वज्रस्तथा शरः ॥ १ ॥ अंगिराः कर्कनामा च सपाभ्यां रहितास्त्विमे ॥ ज्योतिष्टोमस्तथा दर्शो नादी वै पौकसस्तथा ॥ २ ॥ अश्वप्रतिग्रहो रात्रिः सौरभाख्यस्तु सप्तमः ॥ एतानि नगहीनानां नामानि कथितानि ते ॥ ३ ॥ सौभाग्यदः सुकर्मा च शांतिदः पुष्टिदस्तथा ॥ वैनतेयः श्वादनश्च वशीकरणसंज्ञकः ॥ नामानि परिहीनानां कथितानि महामते ॥ ४ ॥ इति श्रीस्कांदे केदारखण्डे संगीतशास्त्रे षाड्जग्रामौडवनामकथनन्नाम सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ईश्वर उवाच ॥ ॥ मध्यमग्रामिके विप्र ह्यौडवान् शृणु नारद ॥ मोहनो वीरकंदर्पदर्पहा शंखचूडकः ॥ गजच्छायस्तथा रौद्रो विष्णुविक्रम एव च ॥ १ ॥ नामान्येतानि देवर्षे चतुर्धा तत्प्रकीर्त्तितम् ॥ काकल्यंतरसैर्मेन विशेषेण प्रकीर्त्तितम् ॥ २ ॥ निसयोः काकली साधारणं ते परिकीर्त्तितम् ॥ गांधारमध्ययोश्चैवांतरस्यापि मतं तु तत् ॥ ३ ॥ समुच्चार्य्य प्रयोज्यौ हिं काकलीधैवतौ ततः ॥ समुच्चार्य्य महाभागांतरर्षभौ ततो मुने ॥ ४ ॥ तथोच्चार्य्य सकाकलिनौ संगच्छेत्तदनंतरम् ॥ तदन्यं मध्यमं चांतं रस्वरं वै प्रयुज्य च ॥ ५ ॥ एवं सर्वत्र देवर्षेरताभ्यां रहितानि ते ॥ संज्ञानि गविहीनानां शृणु भैरवपूर्वकान् ॥ ६ ॥ भैरवः कामदश्चैवावभृथोष्टाकपालकः ॥ स्विष्टकृच्च वषट्कारो मोक्षरस्त्वपरो मतः ॥ ७ ॥ मध्यमग्रामके विप्र चतुर्द्धौ इव तानकाः ॥ साधारणं द्विधा प्रोक्तं स्वरजातिविशेषतः ॥ ८ ॥ तत्र स्वरीयं देवर्षे चतुर्द्धा तत्प्रकीर्त्तितम् ॥ काकल्यंतरसैर्मेन विशेषेण च काकली ॥ ९ ॥ स्वरसाधारणे प्रोक्तं जातिसाधारणं शृणु ॥ एकग्रामे स्थिता अंशा भवेयुर्यदि जातिषु ॥ ॥ १० ॥ रागाश्चैव तथा विप्र जातिसाधारणा मताः ॥ एतद्ग्रामौढवाषाढ व्याख्यानं ते प्रकीर्त्तितम् ॥ ११ ॥ इति श्रीस्कांदे केदारखंडे संगीतशास्त्रे षाडवौडवाख्यानं नामैकसप्ततितमोध्यायः ॥ ७१ ॥ ॥ नारद उवाच ॥ ॥ गानक्रियां महादेव भक्तानुग्रहतत्पर ॥ भक्तायवददेवेश तृप्तिर्मेनास्तिशृण्वतः ॥ १ ॥ ईश्वर उवाच ॥ शृणु नारद वात्सल्यात्तव सर्वं वदामि च ॥ न कदाचिद्धि देवर्षे प्रोक्तं कस्मै

मया खलु ॥ २ ॥ वर्णैर्गानक्रिया प्रोक्ता चतुर्द्धा सा प्रवर्त्तते ॥ तद्भेदाञ्छृणु विप्रर्षे कथयामि समासतः ॥ ३ ॥ स्थाय्या रोहीचावरोही संचारी तच्चतुर्विधा ॥ स्थिरप्रयोगवर्णश्च स्थायिवर्णः प्रकीर्त्तितः ॥ ४ ॥ तथा नारद नामाद्यपरा वत्वर्थवामकौ ॥ एतत्संकरवर्णश्च संचारी समुदाहृतः ॥ ५ ॥ विशेषवर्णग्रथनमलंकारः प्रकीर्त्तितः ॥ बहवस्त्वस्य भेदाः स्युः संक्षेपेण वदामि ते ॥ ६ ॥ स्थायिगान् संप्रवक्ष्यामि येषामाद्यंतयोः स्थिरे ॥ स्वरस्थे वै प्रसन्नादिः प्रसन्नांतस्तथैव च ॥ ७ ॥ तथाद्यंतप्रसन्नस्तु तृतीयः परिकीर्त्तितः ॥ प्रसन्नमध्यमश्चैव पंचमः क्रमरेचितः ॥ ८ ॥ प्रस्तारनामा षष्ठश्च प्रसादः सप्तमः स्मृतः ॥ स्थाय्यालंकारकाः सप्त कीर्त्तितास्ते द्विजोत्तम ॥९॥ आरोहिवर्णालंकारा द्वादश परिकीर्त्तिताः ॥ शृणुष्वैतान्महाभाग हसितं प्रेषितं तथा ॥ १० ॥ आक्षिप्तं संधिप्रच्छादोद्गीतोद्वाहित कास्तथा ॥ विस्तीर्य्यश्चैव निष्कर्षस्तथाभ्युच्चयसंज्ञकः ॥ ११ ॥ त्रिवर्णे वेणिरिति वै द्वादशः परिकीर्त्तितः ॥ तथावरोहक्रमत एत एव च रोहिणी ॥ ॥ १२ ॥ द्वादशावरोह्यलंकारास्तथा वै परिकीर्त्तिताः ॥ शृणु नारद वक्ष्यामि संचारिणी तृतीयकः ॥ १३ ॥ मंद्राद्यो मंद्रमध्यश्च मंद्रांतस्तु तृतीयकः ॥ प्रस्तारश्च प्रसादश्च यावृतः स्खलितस्तथा ॥ १४ ॥ परिवृत्तोत्क्षेपविद्धद्वाहितोर्म्मिसमास्तथा ॥ प्रेषितं च निकूजश्च श्येनोद्धटितरंजिना ॥ १५ ॥ सन्निवृत्तः प्रवृत्तश्च वेणुर्ललित एव च ॥ हुंकारश्च तथा ख्यातो ह्रदमानावलोकितौ ॥ १६ ॥ पंचविंशतिरुद्दिष्टाः संचारिणि महामुने ॥ समालंकारकाश्चान्ये कथ्यंते भाषिता मुने ॥ १७ ॥ तारमंद्रौ प्रसन्नश्च द्वितीयो विपरीतकः ॥ आवर्त्तकः संप्रदानो विधुतश्च तथैव च ॥ १८ ॥ क्रमलोलस्तथा चान्यस्तथोल्लसित एव च ॥ अलंकाराः प्रकथिता भक्तितस्ते द्विजोत्तम ॥ १९ ॥ इति श्रीस्कांदे केदारखंडे संगीतशास्त्रे स्थाय्याद्यलंकारवर्णनं नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ ईश्वर उवाच ॥ ॥ स्वरैः षड्जादिभिः सप्त जातयः शुद्धनामकाः ॥ ता वक्ष्यामि महाभाग मयि भक्तिः परा तव ॥ १ ॥ षड्जी चैवार्षभी विप्र गांधारी मध्यमा तथा ॥ पंचमी धैवती षष्ठी नैषादी सप्तमी तथा ॥ २ ॥ एतत्सांकर्य्यजातीनामानंत्यं वर्त्तते मुने ॥ मूलभूताः प्रकथितास्ताभ्यः सर्वं प्रलक्ष्यते ॥ ३ ॥ इति ते कथिता नादसमुद्भूतिर्मया मुने ॥ नाद एव परं ब्रह्म सर्वं नादात्मकं जगत् ॥ ४ ॥ शब्दं समभ्यसेद्ब्रह्मच गुरुप

क्रात्समीरितम् ॥ गीताक्षरप्रथमके पवर्गं परिवर्जयेत् ॥ ५ ॥ सकारं च दकारं च रकारं च तथैव च ॥ नकारं च चकारं च दकारं च
फलं शृणु ॥ ६ ॥ दकारे कुलनाशः स्यात्सकारे शोकसंभवः ॥ रकारे मरणं प्रोक्तं लक्ष्मीनाशो नकारके ॥ ७ ॥ चकारे स्थाननाशः
स्याद्धेह्यायुः क्षीयते परम् ॥ उद्ग्राहे नगरा वर्णाः शरलांश्चांतरे त्यजेत् ॥ ८ ॥ आभोगे हटकान्विप्र नव वर्णा इमे स्मृताः ॥ उद्ग्राहे
हर ते लक्ष्मीमंतरे हरते यशः ॥ ९ ॥ आभोगे हरते जीवं तस्मात्तत्परिवर्जयेत् ॥ अष्टौ गणाः समाख्याता गीते छंदसि पुण्यदाः ॥
॥ १० ॥ तान्वक्ष्यामि महाभाग सावधानोवधारय ॥ मयरसतजभनाः कीर्त्तिता भेदसम्मिताः ॥११॥ लक्षणानि प्रवक्ष्यामि देवतांश्च
फलं तथा ॥ मगणस्त्रिगुरुः ख्यातो यगणो लघुरादिमः ॥ १२ ॥ रगणो वै मध्यलघुः सगणोन्तगुरुः स्मृतः ॥ तगणोन्तलघुः ख्यातो
जगणो गुरुमध्यमः ॥ १३ ॥ आदिगुरुर्भगणो नगणस्त्रिलघुः स्मृतः ॥ भूमिनाथस्तु मगणो लक्ष्मी प्राप्तिकरो मतः ॥ १४ ॥ शिखी
यगणनाथश्च पुत्रप्राप्तिकरस्तथा ॥ वह्नीरगणस्वामी च मृत्युदो वै प्रकीर्त्तितः ॥ १५ ॥ सगणस्य तथा स्वामी वायुर्वै समुदाहृतः ॥
नानार्थनाशकश्चैव तथैव गृहनाशकः ॥ १६ ॥ तगणेशस्तथाकाशो धनहानिकरो मतः ॥ जगणेशो धामनिधिर्महत्कष्टप्रदो मतः ॥
॥ १७ ॥ चंद्रो भगणनाथस्तु यशःसुखकरो मतः ॥ ईश्वरोहं नगणपो धनायुष्यकरो मतः ॥ १८ ॥ मगणो नगणः पूर्वे यभौ चैव तु
पश्चिमे ॥ रजौ चैवोत्तरे प्रोक्तौ सतौ चैव तु दक्षिणे ॥ १९ ॥ ईशानादौ मयरसतजभनाश्च तथा स्मृताः ॥ विचार्य्य सुधिया गाने गा
तव्या मगणादिकाः ॥ २० ॥ नादरूपं परं ब्रह्म नादरूपी जनार्दनः ॥ नादरूपा परा शक्तिर्नादरूपी महेश्वरः ॥ २१ ॥ काव्यालापाश्च
ये केचिद्गीतकान्यखिलान्यपि ॥ शब्दरूपधरस्यैते विष्णोरंशा महात्मनः ॥ २२ ॥ स्वरस्य जायते नादो नादस्य स्वर एव हि ॥ स्वरस्य
लीयते तालं ताले गीतं समाचरेत् ॥ २३ ॥ नादमध्ये स्थितः सूर्य्यो बिन्दुमध्ये च चंद्रमाः ॥ नादबिंद्वोस्तथैवैक्यं वीर्यमध्ये स्थितं
सदा ॥ २४ ॥ अस्मादेवसमुद्भूतिः सर्वस्य जगतो मुने ॥ तस्मात्सर्वप्रयत्नेन नादब्रह्म समभ्यसेत् ॥ २५ ॥ इति श्रीस्कांदे केदारखण्डे
गीतशास्त्रे षड्जादिजातिप्रमुखकथनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ ईश्वर उवाच ॥ ॥ स्वरभेदान्प्रवक्ष्यामि पदानि विवि

-स्कं. पु. धानि च ॥ उपहंतुर्गलं चैव त्रितयं तु विशारदम् ॥ १ ॥ चतुर्थं चार्थभोगेन ह्येवं च पदलक्षणम् ॥ विधिः संप्रोच्यते विप्र जाकजोक के. सं.
सरोरकम् ॥ २ ॥ रेका टेका तथा ख्याता तथैवाथ प्रहस्तिका ॥ विधिः पंचविधः प्रोक्तो मया वै प्रकटीकृतः ॥ ३ ॥ गुणा अथ च प्रो
॥ ८१ ॥ च्यंते ताञ्छृणुष्व महामुने ॥ उपकारी महाधीरो ह्यंतर्वार्त्ती न चोदति ॥ ४ ॥ दीक्षारसविलस्वेन मोक्षार्थी पूत एव च ॥ उपकारी अ. ७८
महाधीरो निष्ठुरो वचनी बली ॥ ५ ॥ दुःखमंत्ररसंवित्तुतमेवेक्ष्य च वर्त्तनम् ॥ अथ वर्गाश्च प्रोच्यंते नादरूपा महामुने ॥ ६ ॥ अक
चटतपयशा अष्टौ वर्गाः प्रकीर्त्तिताः ॥ अकवर्गौ तथा विप्रौ चटवर्गौ च क्षत्रियौ ॥ तपवर्गौ तथा वैश्यौ यशौ शूद्रौ महामुने ॥ ७ ॥
लयान् शृणु महाभाग गदतो मे यथाक्रमम् ॥ लयश्च विजयश्चैव हास्यं वै तुलतानि च ॥ ८ ॥ प्रौढलक्षणकाश्चैव द्विद्विर्नामलयादिव ॥
अथालतीं प्रवक्ष्यामि शृणु नारद तत्त्वतः ॥ ९ ॥ जाते कृतेग्नौ गतिरिति ततो गतिसमागमे द्विकरस्पर्शसंयोगादालत्या हृदये तथा ॥
॥ १० ॥ हस्त्यश्वमैणवी हंसी मृगी खंजनजातकी ॥ एवं गतिविधानेन तद्वदेतत्सुपर्य्येति ॥ ११ ॥ तालस्य कथ्यते संज्ञास्तथाच च
पुरो मुने ॥ आच चपुटश्चैवोद्घाटस्तथा संप्रवेष्टितः ॥ १२ ॥ सम्यङ्ज्ञानश्च विज्ञेयः पंच तालविधिः स्मृतः ॥ महाकलासु वचने भोजने
चोपवेशने ॥ १३ ॥ संयोगे च वियोगे च निष्ठुरे गायने भवेत् ॥ तेषु तेषु कलाः ख्याता भोजनादौ महामुने ॥ १४ ॥ शुभाशुभौ
शिवः शक्तिर्धरित्री गगनं तथा ॥ धर्म्मं पापं च जानीयादेवंच रचना श्रुता ॥ १५ ॥ अथ ज्योतिर्दिनेशश्च चंद्रमाश्च ततः परम् ॥
दीप्तस्तृतीयो व्याख्यातो ज्योतिस्त्रितयमिष्यते ॥ १६ ॥ द्विसप्ततिः कला ब्रह्मन् कथयामि समासतः ॥ अथादौ गमनकला रसायन
कला ततः ॥ १७ ॥ तथांगलेपनकला रंगाख्या स्तनमर्दनम् ॥ भोजनं योजनं चैव हास्यं लिखनमेव च ॥ १८ ॥ पठितं वचनं चैव
स्त्रीपरिचर्य्या तथैव च ॥ चंदनं चित्तवचनं मूकाख्या स्तनजोहने ॥ १९ ॥ मोहनं चित्रवैचित्र्यौ तथांजनकला मता ॥ देवविद्याकला
चैव परकायप्रवेशनम् ॥ २० ॥ कवित्वं वै नादकला पुराणं धर्ममेव च ॥ कर्मविद्या ज्ञानकला विज्ञानं भाग्यमेव च ॥ २१ ॥ विवाद ॥ ८१ ॥
श्चोपवादश्च मनोरंजनमेव च ॥ वैद्यविद्याकला चैव पैशाची मागधी तथा ॥ २२ ॥ सावर्णी खेटककला संग्रामस्तन्त्रतार्किके ॥ सुग

न्धाख्या कला चैव विचारणकला मता ॥ २३ ॥ तथा विविधवैचित्र्यं ध्यानं वाजिकला तथा ॥ चक्रं हर्षोश्वकला तथा मंडकला मता ॥ २४ ॥ अभिन्नाख्या सैन्यकला चूडामणिकला तथा ॥ भुक्तिमुक्तिकले चैव व्यवहारकला तथा ॥ २५ ॥ ध्यानाकी च व्रतकला जनराजकला तथा ॥ गीतकला क्रोधकला कला सर्वजनप्रिया ॥ प्रसादोत्साहावुद्वेगः क्रीडा लज्जा द्विसप्ततिः ॥ २६ ॥ रसाः षड् वै समाख्यातास्तिक्ताम्लकटुकाः क्रमात् ॥ मधुरक्षारलवणा रसाश्चेमे समीरिताः ॥ २७ ॥ नव नाथाः समाख्यातास्तत्र श्रीआदिनाथकः ॥ अनादिनाथकूर्म्माख्यौ भवनाथस्तथैव च ॥ २८ ॥ सत्यसंतोषनाथौ तु मत्स्येंद्रो गोपिनाथकः ॥ नव नाथास्तु मे ख्याता नादब्रह्मरताः सदा ॥ २९ ॥ इति श्रीस्कांदे केदारखण्डे संगीतशास्त्रीये गानक्रिया नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

॥ नारद उवाच ॥ ॥ कतिरागाः समाख्याताः कथं तेषां समुद्भवः ॥ मूलभूतास्तु षड्ग्रामास्त्वत्त एव समुद्भवाः ॥ रागिण्यश्च कति प्रोक्ता एतद्विस्तरतो वद ॥ १ ॥ ईश्वर उवाच ॥ मूलभूतास्तु षड् ग्रामा मत्त एव समुद्भवाः ॥ तेषां स्त्रियस्तथा पुत्राः पुत्रवध्वस्तथैवच ॥ २ ॥ पौत्राश्चैव ह्यसंख्याताः श्यालाः संबंधिनः स्तथा ॥ तेषां हि विस्तरं प्रोक्तुं नालं वर्षशतैरपि ॥ ३ ॥ अष्टानेव समाख्यास्ये शृणु नारद तन्मनाः ॥ भैरवः प्रथमः ख्यातो द्वितीयो मालकौशिकः ॥ ४ ॥ तृतीयश्चाथ हिंदोलश्चतुर्थो दीपकस्तथा ॥ श्रीरागः पंचमो ज्ञेयो मेघमल्हारःषष्ठकः ॥ ५ ॥ भैरवस्य स्त्रियः पंच ताः शृणुष्व महामते ॥ भूपाली भैरवी चैव रक्तहंसी सुश्रेष्ठिकी ॥ ६ ॥ वेलावली च विख्याताः कौशिकस्य शृणु प्रियाः ॥ कर्णाटी चाथ देशाक्षी कामोदी च धनाश्रकी ॥ ७ ॥ गौरी मोहीति विख्याता मालकौशिकयोषितः ॥ गायनी चाथ गांधारी निर्याना निर्मला तथा ॥ ८ ॥ आसावरी चांशकला गौडी हिंडोलयोषितः ॥ रामकली कोहरी च गुर्जरी पटुमंजरी ॥ ९ ॥ मारुका मारुषेणा च दीपकस्य वरांगनाः ॥ केदारी सुहवा चैव सिंधुका भद्रवी तथा ॥ १० ॥ नटी च मोहिनी चैव श्रीरागस्य वरांगनाः ॥ मल्लारिका गुंडगिरी आक्षीरी तोटिका तथा ॥ ११ ॥ कामोदी च प्रिया प्रोक्ता मेघमल्हारयोषितः ॥ शारदे भैरवो रागो गातव्यः शिशिरे तथा ॥ १२ ॥ मालकौशिकरागो हेमंते हिंदोलकः स्मृतः ॥ वसंते दीपको रागो ग्रीष्मे श्रीरागसंज्ञकः ॥ १३ ॥

वर्षायां मेघरागश्च षड्रागा ऋतुषु स्मृताः ॥ शृणु पुत्रान्भैरवस्य बंगालः पंचमस्तथा ॥ १४ ॥ हर्षो मधुश्च देशाखो ललितो माधव स्तथा ॥ वेलावसस्तथाख्यातो ह्यष्टौ भैरवपुत्रकाः ॥ १५ ॥ मारुमेघाटकौ चैव मिष्टांगो बर्बरस्तथा ॥ चंद्राश्रया लिनंदाख्याः खो खरश्चाष्टमो मतः ॥ १६ ॥ मालकौशिकपुत्राश्च प्रोक्ता अष्टौ महामुने ॥ मंगलश्चंद्रविम्बश्च सुभ्रांगानंदसंज्ञकौ ॥ १७ ॥ विभासो वर्द्धं नश्चैव विनोदाख्यवसंतकौ ॥ हिंदोलकस्य पुत्रास्ते कथिता वसुसंख्यकाः ॥ १८ ॥ कमलो गौडगंभीरौ तथा च गुणसागरः ॥ कल्या णकुंडगंडश्च श्रीरागस्य सुतास्त्विमे ॥ १९ ॥ कर्णाटो नटसारंगौ गौडकेदारसंज्ञकः ॥ गुंडमल्हारकश्चैव तथा जालंधरः स्मृतः ॥ सं करश्चाष्टमः प्रोक्तः पुत्राश्चाष्टौप्रकीर्त्तिताः ॥ २० ॥ एषां सांकर्य्यभेदेन रागाश्च बहुधा तथा ॥ षड्जादिस्वर मिलिता यतस्तत्समयाः स्मृताः ॥ २१ ॥ इति रागाः समा ख्याता मूलभूता महामुने ॥ पुत्रवध्वस्तथा पौत्रा ज्ञेयास्तत्संकरा बुधैः ॥ २२ ॥ इति श्रीस्कांदे केदारखंडे संगीतशास्त्रे रागगणनानाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ ईश्वर उवाच ॥ ॥ शृंगाराः षोडश ख्यातास्ताञ्छृणुष्व महामुने ॥ मज्जनं चारु चीरं च तिलकं नेत्ररंजनम् ॥१॥ कुंडलं नासिकामुक्ताफलं कुसुमहारकः॥केशप्रसाधनं चैव तथा झंकारनूपुरौ ॥ ॥ २ ॥ अङ्गचन्दनलेपश्च कंचुकीधारणं तथा ॥ कांचीकंकण ताम्बूलचातुर्य्यं चेति षोडश ॥ ३ ॥ गीतनामान्यहं वक्ष्ये कमला ललिता तथा ॥ रेका टेकाथ हास्या च तथा चैव प्रबोधिका ॥ ४ ॥ ओतस्याता महावल्ली कलहो मुद्गरस्तथा ॥ खड्गश्चंडस्तथा पूज्यो रसा धिक्यं तथैव च ॥ ५ ॥ धनाढ्या च दरिद्रा च हीना प्रौढांगनास्तथा ॥ कुमुदींद्रसमुद्रा च वेताल मुशलौ गणौ ॥ ६ ॥ यथा नाम तथा दोषो यथा दोषस्तथा गुणः ॥ गुणैर्विरहिते राज्यं धातुहीने धनक्षयः ॥७॥ रंगहीने भवेन्मृत्युर्नास्ति गीतसमो रिपुः ॥ पदहीने शिरो वक्रं कंठहीने च धातवः ॥ ८ ॥ पदहीनेंगहीनत्वं गीतस्यापि भवेन्मुने ॥ तस्मात्सर्वप्रयत्नेन तत्तद्दोषान्विवर्जयेत् ॥ ९ ॥ वक्ष्यामि ध्रुवकान्विप्र जयंतः शिखरस्तथा ॥ उत्साहो मधुरश्चैव निर्ज्जलः कुंतलोम्बुजः ॥ १० ॥ धनं वैराटरेखाच शेखरो बर्बरो मतः ॥ हेमाली च तथा व्याघ्रः पिंडली दरिता तथा ॥ ११ ॥ [illegible] महामुने ॥ हयश्च कुंजरश्चैव वृषभो माहिषः

स्तथा ॥ १२ ॥ भूपितः पृष्ठनामा च प्रभटाञ्छृणु विप्रक ॥ कठिनः कमलश्चैव वज्रं वै मुद्गरस्तथा ॥ खड्गं चक्रं तथा प्रोक्ता ज्ञेयाः प्रभटसंज्ञकाः ॥ १३ ॥ अद्भुतादिविभेदेन अष्ट तालविधिः स्मृतः ॥ जातयः पंचधा प्रोक्ता रेकाटेकाप्रहस्तिकाः ॥ १४ ॥ विह्वला समया चैव ह्येताः सौभाग्यदायिकाः ॥ दर्शनानि तथा वक्ष्ये सांख्यं शैवं जिनात्मकम् ॥ १५ ॥ भाट्टं बौद्धं च पाखंडं कीर्त्तितानि मया हि षट् ॥ सप्त लोकाः समुद्दिष्टा भूर्भुवःस्वस्तथा मुने ॥१६॥ जनस्तपो महर्लोकः सत्यलोकश्च सत्तमः ॥ मानं पृथिव्या वक्ष्यामि समासाद्वदतः शृणु ॥ १७ ॥ यवश्चतुस्तिलः प्रोक्तश्चतुर्णामंगुलिः स्मृतः ॥ तच्चतुर्णां भवेन्मुष्टिश्चतुर्णां हस्तसंज्ञकः ॥ १८ ॥ चतुर्हस्तं धनुः प्रोक्तं द्विशतं धनुषां तथा ॥ क्रोशस्तद्द्वयगव्यूतिर्द्विगव्यूतिश्च योजनम् ॥ १९ ॥ शतयोजनको देशः शतदेशस्तु मंडलम् ॥ मंडलानां शतं खंडं नवखंडात्मका धरा ॥ २० ॥ प्रथमं मेघखंडं तु तथा मदनखंडकम् ॥ खरिखंडं शर्वखंडं तथा भरतखंडकम् ॥ २१ ॥ दधिखंडोद्यानखंडौ बाजिखंडं तथाष्टमम् ॥ तेजः खंडं महाभाग पदार्थान् शृणु तत्परः ॥ २२ ॥ धर्मार्थकाममोक्षाख्याः पदार्था गानगोचराः ॥ लवणेक्षुसुरासर्प्पिर्दधिदुग्धजलानि वै ॥ २३ ॥ लक्षयोजनविस्तीर्णः क्षाराब्धिः परिकीर्त्तितः ॥ द्विगुणेक्षुसमुद्रः स्यात्तद्द्वैगुण्यं सुराम्बुधिः ॥ २४ ॥ सर्प्पिस्तद्द्विगुणः प्रोक्तस्तद्द्वैगुण्यं दध्यंबुधेः ॥ क्षीराब्धिः स द्विगुणको जलाब्धिर्द्विगुणस्तथा ॥ २५ ॥ तत्तद्द्वीपान्प्रवक्ष्येहं जम्बूद्वीपस्तथा कुशः ॥ शाल्मलिः पुष्करश्चैव क्रमरो गोमेदस्तथा ॥ २६ ॥ सप्तमोभ्युदयो ह्येषां प्रमाणं पूर्ववत्स्मृतम् ॥ पृथिव्यां विप्र कोटीनां नगराणि द्विसप्ततिः ॥ २७ ॥ नवकोटिमिता ग्रामाः पंचाशत्कोटिकं तथा ॥ ऊषराणि तथा विप्र चोज्झटाभिस्तथैव च ॥ २८ ॥ पृथ्वीप्रमाणमाख्यातं संगीते चोपकारकम् ॥ कंदर्पस्य गुणान्वक्ष्ये स्वेदः स्तंभो महामते ॥ २९ ॥ रोमांचः स्वरभंगश्च वेपथुश्च विवर्णता ॥ अश्रुपातस्तथाष्टौ वै सात्विका गीतसंभवाः ॥ ३० ॥ छंदांसि शृणु संक्षेपादनुष्टुबष्टवर्णकः ॥ एकादशाक्षरी प्रोक्ता सेंद्रवज्रा प्रकीर्त्तिता ॥ ३१ ॥ द्वादशार्णोपेंद्रवज्रा वसंततिलकां शृणु ॥ चतुर्दशाक्षरी ख्याता मालती सैव वर्णका ॥ ३२ ॥ सप्तादशाक्षरी प्रोक्ता छन्दः शिखरिणी मया ॥ शार्दूलक्रीडितं छंदो वर्णैकोनकविंशतिः ॥ ३३ ॥ एकाधिका विंशतिभिर्वर्णैश्च स्रग्धरा मता ॥ इति

छन्दांसि गीतानां प्रोक्तानि द्विजसत्तम ॥ ३४ ॥ गाहाश्च कथिता विप्र प्रथमा कमला तथा ॥ ललिता च तथा नीला द्रुतारंभा च मागधी ॥ ३५ ॥ लक्षबीजामला हंसी शशिनी हावमुग्धगी ॥ काली कुमारी वोहारिर्विशुद्धिः कामकारिणी ॥ ३६ ॥ यक्षिणी धविनार्वांची गांधारी मंजरी गुरुः ॥ अथ दोहाः समाख्यासे घर्घरो व्यर्धरस्तथा ॥ ३७ ॥ बाह्यो हेमनिवारश्च तथा च श्वानगर्दभौ ॥ पाखण्डो हेमरागश्च उच्चाटो मोहनो रसः ॥ ३८ ॥ इति दोहाः समाख्याता अद्रिलान् शृणु विप्रक ॥ रसंजनी कुमद्रेषी बाला प्रौढा च मुग्धधीः ॥ ३९ ॥ सती च रागभाना च अड्डिलास्त्वमृधा मुने ॥ सोरठा च तथा विप्र स्तंभनो मोहनस्तथा ॥ ४० ॥ विलंबश्चौदयश्चैव हासश्चैव मनस्वरः ॥ सोरठा च समाख्याता कवित्वं शृणु तत्परः ॥ ४१ ॥ रंजनी लोगनी लोहा पांचाली च विभापिका ॥ मंत्रश्च शंकरो नागः कृष्णो रीत्या सुधारिकः ॥ ४२ ॥ तथा कुंडलिया विप्र कथ्यते तन्मनाः शृणु ॥ मृगरूपी सपंचाली विदुरो मेघयानकम् ॥ ॥ ४३ ॥ शयः पंचविधः ख्यातो हास्यं च कलहस्तथा ॥ सन्निकर्षो निराशश्च उपालंभस्तु पंचमः ॥ ४४ ॥ रूपकं त्रिविधं प्रोक्तं व्यापिचालितकालकाः ॥ इति ते कथिता विप्र सर्वगीतस्य संस्थितिः ॥ यज्ज्ञात्वा सर्वविद्विप्र जायते भुवि मानवः ॥ ४५ ॥ इति श्रीस्कांदे केदारखण्डे संगीतशास्त्रे शृंगारादिकथनं नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ ईश्वर उवाच ॥ ॥ गीतदोषान्प्रवक्ष्यामि शृणु नारद तन्मनाः ॥ कंठहीनो लम्बग्रीवो दन्तहीनस्तथैव च ॥ १ ॥ तथा कंटकपालित्वं कंपितं लुंठितं तथा ॥ तारहीनं तथा जिह्वा खंडितं च निषादकम् ॥ २ ॥ गीतदोषाः समाख्याता अथ गायनलक्षणम् ॥ तारे मंद्रे तथा घोरे निःशंकं ग्राम एव च ॥ मनश्चापि तथा तुष्टमेते गीताः प्रियाः स्मृताः ॥ ३ ॥ मृदंगाश्च त्रयः ख्याताः श्रीमुखः स्वस्तिकस्तथा ॥ यवाकृतिस्तृतीयो वै मृदंगाः परिकीर्त्तिताः ॥ ४ ॥ मध्यपर्वत्रयांगं च उदकं कष्टवर्ज्जितम् ॥ क्रवं क्रवं च शब्दौ च तत्कालं घननं स्मृतम् ॥ ५ ॥ धेगुरो धेगुरुश्चैव टंकारश्च विरामिता ॥ तालेन सह गातव्यं कुंभिदीर्घं तथा मुखम् ॥ ६ ॥ यस्तालेन विहीनः स्यादुभया सहितो द्वयम् ॥ तस्यार्चा निष्फला ज्ञेया तस्मात्तालपरो भवेत् ॥ ७ ॥ वंशबद्धा तथा वीणा वंशवर्द्धन कारिणी ॥ रक्तचंदनबद्धा च विद्या नैपुण्यदायिनी ॥ ८ ॥ खादिरा

च तथा वीणा धनधान्यकरी मता ॥ सार्द्धहस्तप्रमाणा वै वीणा कार्य्या सदा बुधैः ॥ ९ ॥ इति ते कथितं विप्र यत्पृष्टोहं त्वयाखिलम् ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ १० ॥ वीणां च महतीं नाम्ना गृहाण स्वरभूषिताम् ॥ ज्ञास्यसे तन्महाभाग महत्यामेव नारद ॥ ११ ॥ सन्यस्ताश्च महाभाग स्वराः सप्त सभेदकाः ॥ १२ ॥ वसिष्ठ उवाच ॥ इति श्रुत्वा नारदोपि प्रणम्य च पुनः पुनः ॥ संजग्राह महादेवाद्वीणां परमपाविनीम् ॥ १३ ॥ ज्ञातवान्सकलान्गीतभेदान्सावरणांस्तथा ॥ शिवोपि भगवान् देवस्तत्रैवांतरधीयत ॥ ॥ १४ ॥ नारदोपि महाभागो रणयन्महतीं मुहुः ॥ परं संतोषमापन्नो ब्रह्मलोकं ययौ मुनिः ॥ १५ ॥ इति सर्वं महाभाग कथितं ते मया शुभम् ॥ सर्वपापप्रशमनं वेदवेदांगसम्मतम् ॥ १६ ॥ नादब्रह्मपराख्यानं स्वर्गीयं मुक्तिकारणम् ॥ नादब्रह्मपरा देवा ब्रह्मविष्णुमहेश्वराः ॥ ॥ १७ ॥ पुरारुंधति विप्राद्या गताः कैलासमंदिरे ॥ सरस्वती च सावित्री सर्वतीर्थानि चैव हि ॥ १८ ॥ श्रोतुं गानं महेशस्य भक्तितत्परमानसाः ॥ शिवोपि तेषां भक्तिं वै संलक्ष्य परमात्मनि ॥ १९ ॥ रागभेदांश्च सर्वान्वै श्रावयामास कृत्स्नशः ॥ श्रुत्वा नादामृतं सर्वे द्रवीभूताः सुरेश्वराः ॥ २० ॥ तद्द्रवो गंगया सार्धमागतो भुवनत्रये ॥ तस्मादिदं परं ब्रह्ममयं गंगाजलं प्रिये ॥ २१ ॥ तत्र स्नात्वा नारदोपि रुद्रतीर्थे महामतिः ॥ गंगा मंदाकिनीसंगे परां सिद्धिमितो गतः ॥ २२ ॥ अतः पृथिव्यां तच्छ्रेष्ठं रुद्रतीर्थं वरानने ॥ यत्र ब्रह्मादयो देवा नागानंतादयः परे ॥ २३ ॥ परां सिद्धिं समापन्नास्ततस्तत्संश्रयेत्पुमान् ॥ लक्षत्रयं च तीर्थानां सहस्राणि तथा दश ॥ २४ ॥ तस्मिन्प्रदेशे वर्त्तंते भुक्तिमुक्तिप्रदानि वै ॥ नागपर्वतमारूढा ह्यारूढास्त्रिदिवं नराः ॥ २५ ॥ मुक्ता लक्षत्रयं तत्र पातका ब्रह्मराक्षसाः ॥ तदैवेदं शुभं स्थानं पापिनामपि मुक्तिदम् ॥ २६ ॥ सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ॥ तत्फलं मासमात्रेण तत्र सत्यं न संशयः ॥ ॥ २७ ॥ इति श्रीस्कांदे केदारखंडे कैलासप्रशंसायां रुद्रतीर्थमाहात्म्ये संगीतशास्त्रसमाप्तिर्नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

॥ अरुंधत्युवाच ॥ ॥ भगवन् सर्वशास्त्रज्ञ कथं लक्षत्रयं मुने ॥ कथं मुक्तिं समापन्नाः के वै ते ब्रह्मराक्षसाः ॥ १ ॥ एतत्सर्वं समासेन वद वृत्तं प्रियास्मि ते ॥ राक्षसत्वं समापन्ना दिव्यदेहं कथं गताः ॥ २ ॥ वसिष्ठ उवाच ॥ शृणु प्रिये यथावृत्तं तेषां चैव दुरात्मनाम् ॥

ब्राह्मणस्य तथा देवि नाम्ना गोपालशर्मणः ॥३॥ पुरा देवाश्रयो नाम गंगाद्वारेऽवसंत् परम् ॥ तस्य पुत्रास्तु पंचासन् वेदवेदांगपारगाः ॥
॥ ४ ॥ षष्ठोऽयं च महाभागे नाम्ना गोपालसंज्ञकः ॥ न पपाठ गुरोर्विद्यां न च धर्मपरोऽभवत् ॥ ५ ॥ कृतवान् बालकं तं वै गवां गो
पालकं पिता ॥ नित्यं व्रजति चारण्ये गवामनुगतः सदा ॥ ६ ॥ सक्तुपिंडं भक्षयति ब्रह्म सूत्रविवर्जितः ॥ इति तस्य व्यतीयुश्च वत्स
राश्च चतुर्दश ॥ ७ ॥ एकदा तस्य मनसि वैराग्यं समुपागतम् ॥ कस्य माता पिता कस्य भ्रातरश्च तथा वृथा ॥ ८ ॥ यतो मां विद्यया
हीनं धनोत्पादेत्वशक्तकम् ॥ तत्यजुर्गोषु संसक्तं कुर्य्युश्च स्वार्थकांक्षिणः ॥ ९ ॥ तस्मादहं हि कैलासं गत्वा तीर्थशते तनुम् ॥ त्यक्ष्या
मि परमां सिद्धिमाप्नुयां यत् करोमि तत् ॥ १० ॥ इति संचिंत्य मनसि नत्वा गोभ्यः पृथक् पृथक् ॥ गतो महामतिः प्रीत्या कैलासे
पर्वतोत्तमे ॥ ११ ॥ नानातीर्थेषु सुस्नातो रुद्रतीर्थे गतो द्विजः ॥ प्रायोपवेशनं चक्रे त्यक्ताहारविहारकः ॥ १२ ॥ मां यावत्कोप्युपदिशे
न्मंत्रं मंत्रविशारदः ॥ तावन्नाहं हि भोक्ष्यामि न गमिष्यामि कुत्रचित् ॥ १३ ॥ ततः पंचमदिवसे मध्याह्ने मुनयस्तदा ॥ अहमादिर्हि
येषां वै सप्त वै परिसंख्यया ॥ १४ ॥ अकुर्वतोपदेशं हि श्रीशिवस्य द्विजातये ॥ संगृह्य च ततो मंत्रं जजाप वसुलक्षकम् ॥ १५ ॥
शिवोपि तस्य संतुष्टो ददौ तस्य वरत्रयम् ॥ सर्वज्ञत्वं पवित्रत्वं सर्वगत्वं च मे प्रिये ॥ १६ ॥ नाम्ना गोपालसिद्धो वै ख्यातः सर्वत्रगः
प्रिये ॥ एकदा ह्यटतस्तस्य कैलासे पर्वतोत्तमे ॥ १७ ॥ तस्मिन्नेव महाक्षेत्रे ते वै दृष्टशिरेऽसुराः ॥ लक्षत्रयं संख्यया वै विरूपा ब्रह्मराक्ष
साः ॥ क्षणात्सिद्धिमवापन्नाः सुरूपाः स्रग्विभूषणाः ॥ १८ ॥ तद्दृष्ट्वा महदाश्चर्य्यं गोपालो द्विजसत्तमः ॥ विचार्य्य ज्ञातवान्सर्वं तथापि
मम वल्लभे ॥ १९ ॥ पप्रच्छाश्चर्य्यचेतास्तु किमिदं किमिदं तथा ॥ के यूयं विकृताकाराः कथमेतां गतिं गताः ॥ २० ॥ दिव्यदेहधरा
स्तद्वत्कथं जाता विरूपकाः ॥ इति मे महदाश्चर्यं वदत प्रभवो मम ॥ आश्चर्य्यं परमं दृष्ट्वा व्यथितोहं न संशयः ॥ २१ ॥ ब्रह्मराक्षसा
ऊचुः ॥ वयं सर्वे महाभाग संख्यया शतलक्षकाः ॥ ब्राह्मणा वेदवेदांगपारगा ब्रह्मवित्तमाः ॥ २२ ॥ गयस्य यज्ञे होतारः सर्वे जाता
महामते ॥ राजप्रतिग्रहात् सर्वे राक्षसीं योनिमाश्रिताः ॥ २३ ॥ शापात्परशुरामस्य एवंभूता विरूपकाः ॥ पुनः प्रसादात्तस्यैव परां

सिद्धिं समागताः ॥ २४ ॥ ब्राह्मण उवाच ॥ कथं परशुरामेण शप्ता यूयं महात्मना ॥ प्रसादश्च कथं जातो वदध्वं विस्तरान्मम॥२५॥
ब्रह्मराक्षसा ऊचुः ॥ गता यज्ञे गयस्यापि वयं कोटिस्तु संख्यया ॥ लब्ध्वा धनं ततो भूरि ह्यसंतुष्टा गता गृहात् ॥२६॥ भिक्षितुं भार्गवं
रामं गता वै धनलुब्धकाः ॥ क्रोधावेशसमारूढः स्वजातीयान्महामतिः ॥ २७ ॥ राज्ञः परिग्रहाद्दुष्टान् लुब्धान् दृष्ट्वा स नो द्विजः ॥
शशाप जलमुत्सृज्य भवथ ब्रह्मराक्षसाः ॥ २८ ॥ प्रायश्चित्तमकुर्वंतः संप्राप्य भूरि द्रव्यकम् ॥ तृष्णापूर्त्तिर्न वो जाता यथा वै ब्रह्मरक्षसा
म् ॥ २९ ॥ यूयं च हि दुरात्मानो भूयास्त ब्रह्मराक्षसाः ॥ इति शप्त्वा द्विजान्सर्वान् जामदग्न्यो महामुनिः ॥ ३० ॥ कैलासमंदिरे चैव
तपस्तप्तुं मनो दधे ॥ तेपि विप्रा वयं सर्वे शापोद्विग्ना महामते ॥ ३१ ॥ तं वै प्रसादयामासुर्मुनिं वै जमदग्निजम् ॥ क्षमस्वेति क्षमस्वेति
क्षमस्वेति मुहुर्मुहुः ॥ ३२ ॥ लोभाक्रांतात्मनां नो हि तारणं वै भवादृशाः ॥ पापयोनिं समापन्नाः कथं मुक्ता भवाम हे ॥३३॥ त्वद्विधा
एव भगवन् शिक्षकाश्च दुरात्मनाम् ॥ राजप्रतिग्रहे मग्नास्तृष्णयोपहता वयम् ॥ ३४ ॥ न कर्त्तास्मः कदाचिद्वै हीदृशं कर्म गर्हितम् ॥
इत्युक्त्वा तं महाभागं प्रणम्य च पुनः पुनः ॥३५॥ पादयोः पतितास्तस्य रेणुकातनयस्य हि ॥ ततः प्रसन्नचेताश्च जगाद वचनं हितम्
॥ ३६ ॥ ब्रह्मरक्षस्त्वमापन्ना भूयः शुद्धा भविष्यथ ॥ कैलासं वै महाक्षेत्रं गंगास्थानं मलापहम् ॥ ३७ ॥ गत्वा तद्दर्शनादेव शुद्धात्मानो
भविष्यथ ॥ नास्मात्परं महापुण्यं सर्वपापप्रणाशनम् ॥ ३८ ॥ यस्य दर्शनमात्रेण नश्यंते पापराशयः ॥ ब्रह्मघ्नोपि सुरापोपि गुरुतल्पर
तोपि च ॥ ३९ ॥ हंतारो गोत्रपितॄणां स्तेयानां च हिमस्थलात् ॥ निष्कृतिर्हि मया दृष्टा नास्मादन्यत्र हे द्विजाः ॥ ४० ॥ तस्माद्यूयं
महाक्षेत्रं गत्वा कैलास मंदिरे ॥ विमुक्ताः सर्वपापेभ्यो मुक्तिं प्राप्स्यथ निर्मलाः ॥ ४१ ॥ इत्युक्त्वा वचनं सोऽपि ययौ कैलासमन्दिरम्
॥ ४२ ॥ ब्रह्मरक्षस्त्वमापन्ना ह्यासुरं भावमाश्रिताः ॥ कोटिसंख्यामिताः सर्वे मानुषाहारतत्पराः ॥४३॥ वयं च भ्रममाणाश्च बहुवर्षस
हस्रकम् ॥ ततः कदाचित्क्षुधिता दृष्टवंतो महामुनिम् ॥ ४४ ॥ पराशरं चंद्रवने दीप्यमानं स्वतेजसा ॥ तमत्तुकामास्तत्रापि तमो
पहतचेतनाः ॥ ४५ ॥ तद्दर्शनात्तमः सर्वं ननाश द्विजसत्तम ॥ रामोक्तस्मृतिमापन्नाश्चक्रम प्रणतिं मुहुः ॥ ४६ ॥ ततः कैलासमासाद्य

मुक्ताः सर्वे कुयोनितः ॥ लक्षद्वयं वयं ह्यत्र मुक्तास्तत्कृपया द्विज ॥ वैकुंठं गंतुमारब्धाः स्वस्ति तेस्तु महामते ॥४७॥ वसिष्ठ उवाच ॥
इत्युक्त्वा प्रययुः खं वै विमानैश्चार्कसन्निभैः ॥ सोपि गोपालसिद्धो वै तत्रैव तपसि स्थितः ॥ ४८ ॥ संप्राप परमं स्थानं देवैरपि सुदुर्ल्ल
भम् ॥ इति तत्परमं स्थानं विख्यातं तव सुप्रिये॥४९॥रुद्रतीर्थस्य माहात्म्यं समासेन मया तव ॥ कथितं विस्तरेणैव नालं वर्षशतैरपि
॥ ५० ॥ श्रुत्वा यत्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ पठित्वा प्राप्यते स्थानं श्रीशिवस्य परात्मनः ॥ ५१ ॥ इति ते कथितं सर्वं
यत्पृष्टोहं त्वया प्रिये ॥ अतःपरं महाभागे किमन्यच्छ्रोतु मिच्छसि ॥ ५२ ॥ इति श्रीस्कांदे केदारखंडे कैलासप्रशंसायां रुद्रतीर्थ
माहात्म्यं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ अरुंधत्युवाच ॥ ॥ भगवन्सर्वधर्मज्ञ भर्त्तर्ब्रह्मसुत प्रभो ॥ लक्षद्वयं रुद्रतीर्थे मुक्ता
वै ब्रह्मराक्षसाः ॥ १ ॥ अन्ये कस्मिन् महाक्षेत्रे मुक्तास्ते वद वल्लभ ॥ किं तत्क्षेत्रं महापुण्यमन्यदस्ति महामते ॥ २ ॥ तच्छ्रोतुं श्रोतु
कामास्मि त्वत्तो वक्ता न कुत्र चित् ॥ ३ ॥ वसिष्ठ उवाच ॥ शृण्वरुंधति क्षेत्राणि यत्र यत्र महासुराः ॥ दिव्याभरणसंपन्ना देवा इव
महाप्रभाः ॥४॥ ययुः परमिकां तन्वि गतिं शृणु मम प्रिये ॥ नीलकंठाख्यतीर्थेषु सप्त लक्षाणि रक्षसाम् ॥ ५॥ मुक्तिं प्राप्तानि तत्क्षेत्रं
शृणु देवि यथातथम्॥ तत्र शुंभनिशुंभाख्यौ पर्वतौ द्वौ महोन्नतौ ॥ ६ ॥ तत्र देवी महेशानी ब्रह्मादिभिरभिष्टुता ॥ यत्र तु श्रीमहादेवः
पार्वत्या सहितः प्रभुः ॥७॥ समक्षं क्रीडते तत्र दृश्यते पुण्यकृज्जनैः ॥ एकदा तत्र रंभोरु रंतिदेवो महीपतिः ॥८॥ चकार तु तपस्तीव्रं
तोषयन्मनसा शिवम् ॥ समक्षं गतवांस्तस्य ह्यचिरेण सदाशिवः ॥ ९ ॥ तत्र रामाज्ञया सप्त लक्षाणि ब्रह्मरक्षसाम् ॥ गत्वा तद्दर्शनादेव
ययुः परमिकां गतिम् ॥१०॥ अथान्यच्च प्रवक्ष्यामि क्षेत्रं चक्राख्यमद्भुतम् ॥ मानसाद्दक्षिणे पार्श्वे नानाधातुविचित्रिते ॥ ११ ॥ सर्वदेव
गणाकीर्णे यक्षगंधर्वसेविते ॥ तत्रैको बिल्ववृक्षोऽस्ति सहस्रकरसम्मितः ॥१२ ॥ तत्र बिल्वेश्वरो नाम महादेवो भयापहः ॥ महत्कष्ट
समापन्नो द्विदिनात्सुखमाप्नुयात् ॥ १३ ॥ तत्र हेरंबकुंडं तु स्नात्वाऽनंतफलप्रदम् ॥ हेरंबेन पुरा यत्र स्तुतो देवि सदाशिवः ॥ १४ ॥
सर्वकर्मप्रथमतः पूज्यत्वं प्रददौ प्रिये ॥ तत्र गाणेश्वरी मूर्त्तिस्त्रिदिनात्सिद्धिदायिनी ॥ १५ ॥ तत्र वै पंचलक्षाणि मुक्तिमापुर्मम प्रिये ॥

पुण्यक्षेत्र मिदं प्रोक्तं महापातकनाशनम् ॥ १६ ॥ अथान्यद्द्रोणवं नाम क्षेत्रं सर्वोत्तमं प्रिये ॥ वेणुना यत्र सुतपस्ततमंगात्मजेन हि ॥
॥ १७ ॥ सरस्तत्र महत्पारं वेणुना निर्मितं पुरा ॥ स्नात्वा तत्र महत्पुण्यं हयमेधसमुद्भवम् ॥ १८ ॥ प्राप्नोति च तथा स्पृश्य सर्वपापैः
प्रमुच्यते ॥ सरसो दक्षिणे पार्श्वे चण्डी चण्डगणैः स्तुता ॥ १९ ॥ जलांतर्धानमापन्ना स्मरणात्पापनाशिनी ॥ पूर्वभागे ततो देवि पुण्यं
पापविशोधनम् ॥२०॥ जलं तत्पीतवर्णं च लक्षणं कथितं तव ॥ तत्र मासाद्व्रती स्थित्वा निधिं पश्यति निश्चयात् ॥२१॥ तत ऊर्ध्वं
देवलस्य स्थलं परमपुण्यदम् ॥ तत्र वै दशलक्षाणि ययुः परमिकां गतिम् ॥२२॥ अन्यच्छृणु महत्क्षेत्रं सर्वपापप्रणाशनम् ॥ विकटक्षे
त्रमाख्यातं धन्यं मुनिवरान्वितम् ॥२३॥ जंभासुरस्य द्वौ पुत्रौ तटो विकट एव च ॥ हते जंभे वासवेन तेपतुः परमं तपः॥२४॥विकटः
शिवभक्तोभूद्विष्णुभक्तस्तटो ह्यभूत् ॥ स्थितवंतौ हि द्विस्थाने महाबलपराक्रमौ ॥ २५ ॥ तत्र क्षेत्रे महाविष्णुश्चतुर्बाहुः सदा स्थितः ॥
विकटेशो महादेवः सर्वकामफलप्रदः ॥२६॥ तस्थौ विकटभक्त्या वै भूतवेतालसंवृतः ॥ चिह्नं तत्र प्रवक्ष्यामि क्षेत्रस्य वरवर्णिनि॥२७॥
महादेवस्थलाद्याम्य जलं परमदुर्लभम् ॥ शैलोदकमिति ख्यातं स्पर्शनात्प्रस्तरो भवेत् ॥ २८ ॥ यत्किंचिद्वस्तु संजातं सत्यमेव न
संशयः ॥ इदं स्थानं परं गोप्यं नवदेयस्य कस्य चित् ॥ २९ ॥ स्वर्णं च मुक्ता रजतं गुटिका खेचरी तथा ॥ अंजनं च तथा हश्यं
परकायप्रवेशनम् ॥३०॥ तत्सर्वं साध्यते तेन शैलोदेन वरानने ॥ नंदीश्वरो महाभागः सर्वकर्मफलप्रदः ॥ ३१ ॥ तत्र नंदी महादेवं
शिवमाराधयत्प्रिये ॥ तदादीदं परं स्थानं जातं त्रैलोक्यपावनम् ॥ ३२ ॥ अस्मिन्वै विकटक्षेत्रे द्विलक्षं ब्रह्मराक्षसाः ॥ मुक्तिं प्राप्ता
महाभागे दर्शना देव तस्य वै ॥३३॥ तटक्षेत्रं तथा देवि शृण्वरुंधति कथ्यते ॥ तटो नाम महादैत्यो विष्णुभक्तिसमाश्रितः ॥ ३४ ॥
जजाप परमां विद्यां पिंडारकनदीतटे ॥ वसुवर्णो महाभागस्त्यक्ताहारविहारकः ॥ ३५ ॥ विंशतिश्च तथा दैत्यः सहस्रद्वितयं तथा ॥
त तो ददर्श गोविंदं शंखचक्रगदाधरम् ॥ ३६ ॥ सूर्यकोटिप्रतीकाशं नानामणिविराजितम् ॥ चतुर्बाहुं महाविष्णुं घनश्यामं घनस्वनम्
॥ ३७ ॥ प्रसन्नो भगवांस्तस्मै निजं स्थानं ददौ तदा ॥ तस्यानुग्रहतस्तत्र वासं चक्रे रमापतिः ॥ ३८ ॥ तटाश्रमे तु यत्किंचि

त्क्रियते योजनास्तृते ॥ तत्सर्वं कोटिगुणित सत्यमेव न संशयः ॥ ३९ ॥ तत्प्रदेशोत्तरे भागे ब्रह्मपुत्रतपःस्थलम् ॥ मरीचिर्भगवान्
यत्र प्राप सिद्धिं दुरासदाम् ॥ ४० ॥ तत्र यत्क्रियते कर्म शुभं वा यदि वाशुभम् ॥ तत्सर्वं कोटिगुणितं वर्द्धते च दिने दिने ॥ ४१ ॥
तस्मात्पुण्यं प्रकुर्य्याच्च पापं नैव समाचरेत् ॥ ब्रह्मपुत्रेश्वरं तत्र शिवलिंगं महाद्भुतम् ॥ नानाद्रुमलताकीर्णं सद्यो मुक्तिप्रदायकम्॥४२॥
इति श्रीस्कांदे केदारखण्डे नानातीर्थमाहात्म्ये एकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ वसिष्ठ उवाच ॥ ॥ ब्रह्मपुत्रोत्तरे भागे नाम्ना
पुष्करपर्वतः ॥ तस्मिन्देवाः सगंधर्वा नागाः किन्नर गुह्यकाः ॥ १ ॥ उपासंते स्म भूतेशं सर्वेऽन्ये च मुमुक्षवः ॥ तत्राऽनेकानि तीर्थानि
भवलोक प्रदानि च ॥२॥ शिवस्थानानि लिंगानि मुनीनामाश्रमास्तथा ॥ देवीपीठानि दिव्यानि सद्यः प्रत्ययदानि च ॥३॥ यत्र नागैः
पुरा तन्वि सोमः शिव उपासितः ॥ शिवभूषणतां प्राप्ता हिंसका अपि ते प्रिये ॥ इदं गुह्यतमं स्थानं ज्ञातं प्रीत्या शिवान्मया ॥४॥
अरुंधत्युवाच ॥ आश्चर्यभूतं कथितं क्षेत्रं परमदुर्लभम् ॥ नागा यत्र दुरात्मानः प्राप्ताः शिवकलेवरम्॥५॥विस्तरेण समाचक्ष्व सर्वज्ञोसि
यतः प्रभो ॥ त्वया यदपि ख्यातानि तीर्थानि प्रवराणि मे ॥ तथापि तीर्थमाहात्म्यं श्रोतुमिच्छा प्रवर्द्धते ॥ ६ ॥ वसिष्ठ उवाच ॥ पुरा
रतिरहस्ये वै शिवेन कथितं प्रिये ॥ प्रियायै प्रीतिकामायै तत्ते वक्ष्यामि सर्वशः ॥ ७ ॥ सर्गादौ सृष्टवान् ब्रह्मा पुरा सर्वं चराचरम् ॥
सृष्टा अपि न वर्द्धंते प्रजा देवि प्रजापतेः ॥८॥ तदा मनसि संदध्यौ प्रजाः स्रष्टुं दृढव्रते ॥ तस्य संध्यायतो जज्ञे मानसी संततिस्तदा
॥ ९ ॥ तथापि न प्रजाः सर्वा वर्द्धिताः कर्मणि क्षमाः ॥ तदा मैथुनकीं सृष्टिं चक्रे लोकपितामहः ॥ १० ॥ अदित्यां कश्यपाद्देवा
दित्यां दैत्या दुरासदाः ॥ कद्र्वां नागाः समभवन्विषदिग्धकलेवराः ॥ ११ ॥ बहवस्ते दुरात्मानो ब्रह्माणं दष्टुमुद्यताः ॥ करालवदना
घोराः फणामंडलमंडिताः ॥ १२ ॥ अनेकवर्णा विकृताः शप्तास्ते ब्रह्मणा तदा ॥ हिंसकाः प्राणिनां यूयं भविष्यथ न संशयः ॥ १३ ॥
क्षुधया तृषयाविष्टाः परद्रोहपरायणाः ॥ इति शप्ता ब्रह्मणा ते भयसंविग्नमानसाः ॥ ब्रह्माणं प्रणिपत्योचुर्नागाः कद्रुतनूद्भवाः ॥ १४ ॥
नागा ऊचुः ॥ नमस्ते देवदेवेश ब्रह्मन् लोकपितामह ॥ त्वया सृष्टमिदं विश्वं सचरं साचरं विभो ॥ १५ ॥ त्वयैव हि वयमपि सृष्टा

विषमयाः किल ॥ परीक्षैव कृतास्माभिः शरीरांतर्विषस्य हि ॥ १६ ॥ स्वभाव एव चास्माकं प्राणिनां यच्च दंशनम् ॥ क्षंतव्यश्चापराधो नः क्षमाशीला हि साधवः ॥१७॥ ब्रह्मोवाच ॥ अमोघो मामकः शापो भविष्यत्येव बालिशाः ॥ तथापि च तदुद्धारो भविष्यति युगांतरे ॥ १८ ॥ सदाशिवानुग्रहेण गच्छध्वं हिमपर्वते ॥ तत्र देवाधिदेवस्य चंद्रचूडस्य सेवनम् ॥ १९ ॥ कुरुध्वं स च युष्मभ्यं वरं दास्यति सर्वथा ॥ इति श्रुत्वा तु ते नागाः पुष्कराद्या हिमालये ॥ २० ॥ गतास्तेपुः परं ताप्यं तपो दुश्चरणीयकम् ॥ एकपादेन त्यक्तान्ना वायुभक्षा दिवानिशम् ॥ २१ ॥ कल्पत्रयं गतं तेषां तपतां वरवर्णिनि ॥ शिवस्य परदेवस्य चलितं हि तदासनम् ॥ २२ ॥ पुनस्तेपुश्च ते नागास्तदाविर्भावितां गतः ॥ शिवः समा गतस्तत्र यत्र ते कद्रुजाः प्रिये ॥ २३ ॥ दर्शनं दत्तवान्दिव्यं त्रिशूलांकितहस्तकम् ॥ तत्र दृष्ट्वा शिवं नागाः पुष्कराद्याः प्रतुष्टुवुः ॥ २४ ॥ नमस्ते शिवेश प्रभो भीम भर्ग त्रिनेत्र त्रिशूलं बिभर्षि क्षमेश ॥ सदा सृष्टिकर्त्रे प्रहर्त्रे बिभर्त्रे नमोस्तु क्षपानाथखंडालकाय ॥ २५ ॥ महारौद्रदंडप्रहारेंद्रमुख्यत्रसद्देववृंदैः स्तुतायार्त्तिहंत्रे ॥ नतस्येष्टदात्रे पुरारे नमस्ते नमस्ते नमस्ते नमस्ते नमस्ते ॥२६॥ असारसंसारमहासमुद्रसंतारणोपायतरिस्त्वमेव ॥ त्वमेव सूक्ष्मोसि नृणां हृदंतर्विराजसे लीनतरः सदैव ॥ ॥२७॥ त्वन्मायया मोहसमाकुलैः स्वैर्न ज्ञायसे व्याप्य बिभर्षि विश्वम् ॥ वेदांतविद्यापरिवेदिभिश्च कुतर्किभिर्वाङ्मयजालवादैः ॥ २८ ॥ चिन्वंति न त्वां सुतरां सुशीलैर्मूढा भवंतीह त्वदर्थवादे ॥ नंदीमुखैस्त्वं सततं समीड्य त्वदिच्छयैतत् सचराचरं जगत् ॥ २९ ॥ हिमालयोर्वींसुविहारदक्ष भक्तिप्रबोधैक सुगम्यपाद ॥ भक्तार्त्तिनाशे सततं प्रदत्तचेतः सुचेतःसमवाप्य देव ॥ ३० ॥ इति स्तुतो महादेवः काद्रवेयैस्तदा प्रिये ॥ तुष्टः प्रोवाच वचनं तपसा स्तवनेन च ॥ ३१ ॥ वरं वृणुध्वं भद्रं वो यद्युष्मन्मनसि स्थितम् ॥ श्रुत्वा शिववचो नागा वरमूचुः सनातनम् ॥ ३२ ॥ यदि देवेश तुष्टोसि स्याम त्वद्भूषणं वयम् ॥ पूज्याश्च सर्वमर्त्यानां क्षेत्रमेतन्महेश्वर ॥ ३३ ॥ अस्मनाम्ना ख्यातिमेतु द्याचंद्रार्कनभस्तलम् ॥ इदं पुण्यतमं क्षेत्रं तीर्थवृन्द विराजितम् ॥ ३४ ॥ त्वया चैव हि न त्याज्यं सोमेन सगणेन च ॥ श्रुत्वा नागवचो देवस्तथेत्युक्त्वा तिरोभवत् ॥ ३५ ॥ तदादिदं महाभागे बभूव क्षेत्रमुत्तमम् ॥ शिवभूषणतां प्राप्तास्तत आरभ्य सुं

दरि ॥ ३६ ॥ अस्मिंस्तीर्थवरे संति सर्वे देवाः सकिन्नराः ॥ गंधर्वाश्चाप्सरोवृन्दा दृश्यंते पुण्यसंचयात् ॥ ३७ ॥ पुष्करः पद्मकश्चैव
वासुकिस्तक्षकस्तथा ॥ कम्बलाश्वतरौ नागौ शेषः शंखपुलिस्तथा ॥ ३८ ॥ महापद्मश्चैकशिरा द्विशीर्षास्त्रिशिरास्तथा ॥ एकपुच्छा द्वि
पुच्छाश्च बहुपुच्छास्तथापरे ॥ ३९ ॥ एते चान्येपि बहवो लीनास्तिष्ठन्ति जिह्मगाः ॥ स्वर्णादिधातुनिलयास्तथा ताम्रमया नगाः ॥
॥ ४० ॥ रत्नानां चाकरा ह्यत्र निधीनां निलयास्तथा ॥ तथा च सिद्धौषधयः सर्वे ते पुण्यगोचराः ॥ ४१ ॥ बह्वचो नद्यस्तथा धारा
गंगातुल्यफलप्रदाः ॥ गौरीपीठान्यनेकानि शिवलिंगान्यनेकशः ॥ ४२ ॥ सद्यः प्रत्ययकारीणि सर्वपापहराणि च ॥ धन्याः कलियुगे
घोरे नराः पुण्यविवर्जिते ॥ अस्मिन्क्षेत्रे स्थिता नित्यं तेप्यशोच्या मृता यदि ॥ ४३ ॥ अरुंधत्युवाच ॥ कियत्प्रमाणं तत्क्षेत्रं कानि
तीर्थानि तत्र वै ॥ कैश्च तप्तं तपश्चात्र किं चाप्तं फलमत्र हि ॥ ४४ ॥ को वा पुष्करको नामा यन्नाम्ना पर्वतो ह्यभूत् ॥ इति मे शंस दयित
विस्तरेण ममाधुना ॥ ४५ ॥ वसिष्ठ उवाच ॥ ब्रह्मपुत्रतपस्थानाद्गव्यूतिद्वयकाधिके ॥ उत्तराश्रितदिग्भागे ख्यातः पुष्करपर्वतः ॥४६॥
आद्यो हि सर्वनागानां पुष्करोनंतकल्पकः ॥ सदाशिवप्रेमपात्रं शिवमूर्ध्नि स्थितोनिशम् ॥ ४७ ॥ तस्माद्गव्यूतिमात्रं च पश्चिमे योजना
यतम् ॥ पूर्वे क्रोशत्रयं याम्ये चोत्तरे क्रोशमात्रकम् ॥ ४८ ॥ एतत्प्रमाणकं क्षेत्रं मुनिसिद्धनिषेवितम् ॥ नानामुनि गणाकीर्णं नानागुल्म
लतावृतम् ॥ ४९ ॥ नानाद्रुमगणोपेतं नागकन्याप्सरोवृतम् ॥ गमनाद्दर्शनादेव महापातकनाशनम् ॥ ५० ॥ क्षेत्रगामिनरं दृष्ट्वा कंपंते
पापराशयः ॥ अत्र यस्त्यजते प्राणान्स याति शिवमच्युतम् ॥५१॥ प्रमाणं कथितं भद्रे तीर्थानि शृणु तत्त्वतः ॥ पुष्करो नाम नागस्तु
ततापं परमं तपः ॥ ५२ ॥ पर्वतेस्मिंस्ततो नाम्ना ख्यातः पुष्करपर्व्वतः ॥ शिवाराधनतो जातो गिरिः पुण्यतमः प्रिये ॥ ५३ ॥ तत्रास्ते
शिवलिंगं तु पुष्करेश्वरसंज्ञितम् ॥ दृष्ट्वैव सर्वपापानि प्रशमं यांति सर्वशः ॥ ५४ ॥ पूजनाद्व्योमयानेन किंकिणीजालमालिना ॥ आलिं
गितोप्सरोभिश्च शिवलोकमवाप्नुयात् ॥ ५५ ॥ तस्मात्पूर्वाश्रिते याम्ये देवीस्थानमनुत्तमम् ॥ तत्रास्ते चंडिका देवी सद्यः प्रत्ययका
रिणी ॥ ५६ ॥ दर्शनात्स्पर्शनाच्चैव पूजनाद्बलिदानतः ॥ सन्तुष्टा वरदा नित्यं स्वलोकं संप्रयच्छति ॥ ५७ ॥ तत्र स्थित्वा तु कल्पांतं

भूपतिर्जायते धनी ॥ तत्रैव शिवलिंगं तु नाम्ना तारेश्वरः स्मृतः ॥ ५८ ॥ तदर्चनात्पुत्रपौत्रैः सहितो भगवान्भवेत् ॥ अंते याति परं स्थानं योगिनामपि दुर्लभम् ॥ ५९ ॥ तस्माद्याम्याश्रिते भागे कावेरीति नदी स्मृता ॥ तज्जलस्पर्शमात्रेण निःपापो जायते नरः ॥ ॥ ६० ॥ पानेन तज्जलस्यापि नरो याति शिवालयम् ॥ कोटिसूर्याभयानेन प्रस्फुरद्ध्वजराजिना ॥ ६१ ॥ अप्सरोगणगंधर्वैः सेव्यमानोनिशं भृशम् ॥ तस्यां तु मज्जनाद्याति शिवसायुज्यमुत्तमम् ॥ ६२ ॥ पितॄनुद्दिश्य यः श्राद्धं तर्प्पणं वापि शक्तितः ॥ पितरस्तस्य तृप्ताः स्युर्यावदाभूतसंप्लवम् ॥ ६३ ॥ तत्रैव शिवलिंगं तु कावेरीश्वरसंज्ञितम् ॥ दर्शनात्तस्य देवस्य मुच्यते ब्रह्महत्यया ॥ ६४ ॥ पूजनाद्भ्रूणहत्यादिपापानि नाशमाप्नुयुः ॥ पक्षमात्रं पूजनेन स्नपनेनांबुधारया ॥ ६५ ॥ शिवसायुज्यतां यांति भुक्त्वा भोगानशेषतः ॥ महारुद्रविधानेन लघुरुद्रेण वानघे ॥ ६६ ॥ स्नपयेच्छैवलिंगं तु तस्य पुण्यफलं शृणु ॥ भुक्त्वाऽशेषांस्तु भोगान्वै कृत्वा चैव महत्सुखम् ॥ ६७ ॥ पुत्रादिभिर्युतो मर्त्यो वसेच्छिवपुरं ततः ॥ भूमंडले समागत्य चक्रवर्त्ती नृपो भवेत् ॥ अंते च शिवसायुज्यं लभते नात्र संशयः ॥ ६८ ॥ ततो याम्याश्रिते देशे नागधारा स्मृता प्रिये ॥ यत्र नागैस्तपस्तप्तं शिवाराधनतत्परैः ॥ ६९ ॥ तैर्नीतेयं पयोधारा पानप्रकरलोलुपैः ॥ शिवेन दत्ता नागेभ्यो नागधारा ततः स्मृता ॥ ७० ॥ तत्पानतो नरो नित्यममृतत्वं प्रगच्छति ॥ अतः शृणु महाभागे निगमालयसंज्ञिका ॥ ७१ ॥ नदी पुण्या पापहरा स्मृता परमपावनी ॥ निगमैर्यत्र लब्धं हि पावनत्वं महाद्भुतम् ॥ ७२ ॥ द्वीपेश्वरो नृपो यत्र पंचत्वं हि गतामपि ॥ प्राप भार्यां स्वकीयां वै पतिधर्मानुचारिणीम् ॥ ७३ ॥ अरुंधत्युवाच ॥ अत्यद्भुतमिदं प्रोक्तं भवता सर्ववेदिना ॥ कथं प्राप मृतां भार्यां नाथ द्वीपेश्वरो नृपः ॥ ७४ ॥ वसिष्ठ उवाच ॥ जंबूद्वीपेऽभवद्भूपो द्वीपेश्वरनृपो महान् ॥ सदा धर्मरतः साधुर्विजयी धनवान् क्षमी ॥ ७५ ॥ ददौ दानानि सर्वाणि महादानानि षोडश ॥ उपयेमे प्रिया बह्व्यो गुणरूपसमन्विताः ॥ ॥ ७६ ॥ तास्वप्येका बभूवास्य भूपस्य प्राणवल्लभा ॥ माणिक्याभा स्मृता नाम्ना समस्तसुगुणालया ॥ ७७ ॥ सततं निरतस्तस्यां प्रेमाधिक्यं चकार सः ॥ तत्परोक्षे किमपि नो करोति सुकरं तु वा ॥ ७८ ॥ अपराधेपि महति सत्यपि क्षितिपालकः ॥ पत्नीवंतं स्वमा

त्मानं मेने पत्न्या तया नृपः ॥ ७९ ॥ चकार सैव सर्वं हि राजकार्य्यादिकं प्रिया ॥ तया विना जलमपि पातुं नेच्छति भूपतिः ॥
॥ ८० ॥ पुत्रान्वितोपि तत्रैव प्रेमासीन्नृपतेस्तदा ॥ अथ दैववशाद्राज्ञी ग्रस्तातंकेन वल्लभा ॥ ८१ ॥ मृद्धंगी नासहत्तं तु ततः पंचत्वमा
गता ॥ श्रुत्वा राजा तु पंचत्वं भार्यायाः शोकपीडितः ॥ ८२ ॥ हा हतोहं क्व गच्छामि कथं जीवामि निःश्वसन् ॥ विना सुप्रियया
पत्न्या संलप्येति मुहुर्मुहुः ॥ ८३ ॥ सर्वं राज्यादिकं त्यक्त्वा मरणे कृतनिश्चयः ॥ भूयादसुव्यपायो मे केन चिंतामिति व्यधात् ॥८४॥
वने वने च बभ्राम हा प्रिये चेति संलपन् ॥ ययौ देशात्परं देशं भ्रांतचेता बभूव ह ॥ ८५ ॥ तीर्थात्तीर्थान्तरं गत्वा तपः परमदारुणम् ॥
चकार तन्मना भूत्वा तत्संगो मे कथं भवेत् ॥ ८६ ॥ ततो बहुतिथे काले दैवयोगाद्ययौ नृपः ॥ हिमालये पुण्यदेशे मुनिवृंदविराजिते ॥
॥ ८७ ॥ ददर्श तत्र सिद्धांश्च तान्नत्वा पर्य्यपृच्छत ॥ अये सिद्धा महात्मानः प्रियाविरहितो ह्यहम् ॥ ८८ ॥ कथं प्रियासमं संगो मे
स्याद्भुतदयालवः ॥ तया विना न जीवामि सत्यमेतन्मयोदितम् ॥ ८९ ॥ तन्मध्ये कश्चिद्दृषिराट् प्रोवाच वचनं त्विदम् ॥ तत्र गच्छ
तपः कर्तुं नदी च निगमालया ॥ ९० ॥ तत्तीरे वसते नित्यं शिवः सोमः सुमुक्तिदः ॥ तदाराधनतो भार्यां प्राप्स्यसे त्वं न संशयः ॥
॥ ९१ ॥ राजा तद्वचनं श्रुत्वा यत्र वै निगमालया ॥ आययौ तत्र नृपतिश्चकार परमं तपः ॥ ९२ ॥ आराधयामास शिवं भक्ताधिव्या
धिनाशनम् ॥ ततस्तुष्टः शिवः प्रादाद्दर्शनं योगिदुर्ल्लभम् ॥ ९३ ॥ वरं वरय भद्रं ते यत्ते मनसि संस्थितम् ॥ इति श्रुत्वा शिववचो नृप
तिर्ह्यमृतोपमम् ॥ ९४ ॥ उवाच मनसोभीष्टं वचो जीवनहेतुकम् ॥ किं मे भोगैः सुखैः किं मे वाजिवारणकैश्च किम् ॥ ९५ ॥ किं
जनैर्मधुरैर्वाक्यैर्यदि न स्यादसुप्रिया ॥ प्रियायोगेन मां देव पुनरुज्जीवय प्रभो ॥ ९६ ॥ मृता मे प्रेयसी भार्या तां ददस्वास्ति चेद्दया ॥
अन्यथाहं त्यजे प्राणान् तवाग्रे च दयानिधे ॥ ९७ ॥ इति तद्वचनं श्रुत्वा शिवः परमविस्मितः ॥ मनसा चिंतयामास किं कुर्य्यां कथ
मन्यथा ॥ ९८ ॥ वरं यदि न दास्येहं मदीयाराधनं वृथा ॥ अयं च त्यजति प्राणान्मृतः कश्चिन्न चागतः ॥ ९९ ॥ इति चिंताकुलो ॥ ८८
भीमः स्वमायामकरोत्तदा ॥ तत्पत्नीं तादृशीं शीलरूपलक्षणवर्णकैः ॥ १०० ॥ कल्पयित्वा ददौ तस्मै वचनं च ह्युवाच ह ॥ इयं तेस्ति

न वा पत्नी वद सत्यं महीपते ॥ १०१ ॥ श्रुत्वा नृपोवदद्वाक्यं धन्योसि त्वं महेश्वर ॥ इयमेव मदीया हि पत्नी पूर्वं मृता हि या ॥
॥ १०२ ॥ धन्योहं कृतकृत्योहं त्वत्प्रसादात्सदाशिव ॥ प्राप्ता मया सुतुल्या हि पत्नी प्राणप्रदायिनी ॥ १०३ ॥ तवैव सर्वदा भक्ति
र्मेस्तु जन्मनि जन्मनि ॥ अत्रैव तव वासो वै भवताद्भुक्तिमुक्तिद ॥ १०४ ॥ इत्थं वचः शिवः श्रुत्वा तथेत्यंतर्हितो भवत् ॥ पुनर्जात
मिवात्मानं मेने स पृथिवीपतिः ॥ १०५ ॥ पुनस्तथैव राज्यादिभोगान्भुक्त्वा यथेप्सितान् ॥ विमानवरमारुह्य शिवलोकमवाप सः ॥
॥ १०६ ॥ अस्मात्क्षेत्रात्परं क्षेत्रं नास्त्येव हि महीतले ॥ यत्र देवः शिवः साक्षाद्वर्त्तते चोमया सह ॥ १०७ ॥ यद्दर्शनादपि नरो
गतिमाप्नोति दुर्लभाम् ॥ अस्मिन्क्षेत्रे महाभागे शिवलिंगं महाद्भुतम् ॥ १०८ ॥ जलेश्वरमिति ख्यातं दर्शनान्मुक्तिदायकम् ॥ तत्रैवास्ते
महादेवी जलेश्वरीति संज्ञिता ॥ १०९ ॥ दर्शनात्पूजनान्मर्त्यो महैश्वर्य्यमवाप्नुयात् ॥ सर्वकामप्रदा देवी सद्यः प्रत्ययकारिणी ॥११०॥
बलिदानेन संतुष्टा भवतीह न चान्यथा ॥ तस्मात्तस्यै बलिर्देयो महदैश्वर्यमिच्छता ॥१११॥ देवीस्थानादधोभागे सर्वेप्सितफलप्रदम् ॥
अन्यच्च देवतापीठं जपेश्वर्याः शुचिस्मिते ॥ ११२ ॥ सकृन्नत्वापि तां देवीं देवलोके महीयते ॥ आश्विनस्य सिते पक्षे योर्च्चयेदंबिका
मिह ॥ ११३ ॥ कुबेर इव द्रव्याढ्यो भवत्येव न संशयः ॥ पुत्रपौत्रसमायुक्तो भुक्त्वा भोगानशेषतः ॥ ११४ ॥ देवीसायुज्यमाप्नोति स
त्यमेतच्छिवोदितम् ॥ अस्मिन्क्षेत्रे महाभागे सर्वं पुण्यतमाश्रयाः ॥ ११५ ॥ यत्र धारा अनेकाश्च सर्वास्ता गंगया समाः ॥ जलानि
च समस्तानि भवमुक्तिप्रदानि हि ॥ ११६ ॥ देवीपीठात्पूर्वभागे गव्यूतिद्वयमात्रके ॥ तत्रैवान्यत्परं स्थानं वेणुकायाः सुमुक्तिदम् ॥
॥ ११७ ॥ यत्र वै नहुषस्यासौ दुहिता समतप्यत ॥ प्रापेप्सितं पतिं दिव्यं सुंदरांगं सुशोभनम् ॥ ११८ ॥ ततः ख्यातं तु तन्नाम्ना क्षेत्र
मेतत्सुपुण्यदम् ॥ यत्र पादप्रचारेण लभते चेप्सितं फलम् ॥ ११९ ॥ तत्रास्ते च नदी रम्या सर्वपापप्रणाशिनी ॥ तस्यां स्नात्वा नरो
भक्त्या शिव एव भवेद्ध्रुवम् ॥ १२० ॥ देव्याः पूर्वोत्तरे भागे ढुंढीश्वर इति स्मृतः ॥ महागणपतिश्चैष सर्वविघ्ननिवारणः ॥ १२१ ॥
रक्षिता तस्य क्षेत्रस्य सर्वाभीष्टप्रदायकः ॥ यन्नामस्मरणादेव भवेद्विघ्नविनाशनम् ॥ १२२ ॥ तस्येशानदिगंशे हि भैरवो भीषणाननः ॥

स्कं. पु. यस्य स्मरणमात्रेण पलायंते महापदः ॥ १२३ ॥ क्षेत्रद्वाराधिपतिश्च विघ्नास्तदवहेलनात् ॥ जायंते विधिनानर्थास्तस्मात्पूजा परो के. खं.
भवेत् ॥ १२४ ॥ आदौ क्षेत्रप्रवेशे तु दूरतः प्रणमेत्तु तम् ॥ पश्चात्क्षेत्रं विशेन्मर्त्यः स्वेष्टसिद्धिपरो यदि ॥ १२५ ॥ धूपैर्दीपैः सुनैवेद्यैः
८९ ॥ पूजयेत्क्षेत्रनायकम् ॥ सकलां सिद्धिमाप्नोति तत्पूजानिरतो नरः ॥ १२६ ॥ इति पुष्करशैलस्य माहात्म्यं कथितं तव ॥ इदं गोप्यतमं अ. ८१
गोप्यं शौचाचारविवर्जितः ॥ १२७ ॥ शृणुयादपि यो मर्त्यो माहात्म्यं हिमवद्गिरेः ॥ ख्यातं पुष्करशैलस्य सोपि याति परं पदम् ॥
॥ १२८ ॥ ॥ इति श्रीस्कांदे केदारखंडे नानातीर्थमाहात्म्ये पुष्करपर्वतमाहात्म्यं नामाशीतितमोऽध्यायः ॥ ८० ॥
॥ वसिष्ठ उवाच ॥ ॥ ब्रह्मपुत्रतपःस्थानादाग्नेयाश्रितभागके ॥ स्थानं परमरम्यं हि शिवलोकप्रदायकम् ॥ १ ॥ सेवितं सिद्धमुनि
भिर्वेदघोषनिनादितम् ॥ तत्र गोविंदतीर्थं तु यत्र भानुर्महानदी ॥ २ ॥ पिंडारकां तु संप्राप्ता तत्तीर्थं शिवदायकम् ॥ वीरेशानी तथा
देवी सद्यः प्रत्ययकारिका ॥ ३ ॥ यस्तत्र व्याधितो मूढो दरिद्रो देवतागृहे ॥ इमं मंत्रं समुच्चार्य्य देविशरणमागतः ॥ ४ ॥ तस्य स्या
त्सकलाभीष्टसिद्धिर्निश्चयतः प्रिये ॥ नमो नमस्ते देवेशि सर्वदुःखविनाशिनि ॥ ५ ॥ विनाशय महादुःखं कृपया भक्तवत्सले ॥ तत
ईशानकोणे वै विनतेश्वरनामकः ॥ ६ ॥ शिवो नित्यं महाभागे वर्त्तते भक्तवत्सलः ॥ अस्मिन्नपि महाक्षेत्रे त्रीणि लक्षाणि रक्षसाम् ॥
॥ ७ ॥ स्वर्गं गतानि वामांगि दिव्यदेहानि निश्चयात् ॥ इति ते कथितं क्षेत्रं सद्यः प्रत्ययकारकम् ॥ ८ ॥ तत एवेशदिक्कोणे क्षेत्रं
त्रैलोक्यमंगलम् ॥ नाम्ना विश्वमिति ख्यातं शिवलिंगं विराजितम् ॥ ९ ॥ नानातीर्थसमायुक्तं नानामुनिजनान्वितम् ॥ तत्र विश्वेश्वरो
देवो लिंगरूपी सदाशिवः ॥ १० ॥ तद्दर्शनान्महाभागे कोटियज्ञफलं लभेत् ॥ तत्रैव शिवकुंडं तु शिवभक्तिप्रदायकम् ॥ ११ ॥ दि
नानां पंचकं तत्र स्नात्वा शिवपरायणः ॥ कौतुकं पश्यते तत्र दिव्यं वापि सुदुर्लभम् ॥ शिवलोकं समाप्नोति सत्यमेव न संशयः ॥
॥ १२ ॥ गणकुंडं ततः ख्यातं सौम्ये सौम्येश्वरः शिवः ॥ पुत्रकामफलनिधिः सर्वकामफलप्रदः ॥ १३ ॥ रम्भाकुंडं ततः ख्यातं सर्वै ॥ ८९

श्वर्य्यप्रदायकम् ॥ यत्र रंभा महादेवमाराधितवती पुरा ॥ १४ ॥ अस्मिन् द्वादश लक्षाणि मुक्तिं प्राप्तानि रक्षसाम् ॥ अन्यतीर्थं शृणु

प्राशे दशमौलितपःस्थलम् ॥ १५ ॥ दशमौलिः पुरा तत्र तपस्तेपे महात्मवान् ॥ दशवर्षसहस्राणि त्यक्ताहारविहारकः ॥ १६ ॥ परिपू
र्त्तिर्यदा याति शिरो वर्षसहस्रकम् ॥ छित्वार्प्पयति भक्त्या वै शिवायामिततेजसे ॥ १७ ॥ एवं नव सहस्राणि वर्षाणां प्रवरानने ॥
व्यतीयुर्धर्मशीलस्य शिवसंन्यस्तकर्मणः ॥ १८ ॥ ततो दशमसाहस्रे शिरोर्प्पयति रावणे ॥ शिवः प्रत्यक्षतस्तस्य जगाद मधुरं वचः ॥
॥ १९ ॥ वरं वृणीष्व भद्रं ते धन्यस्त्वमसि रावण ॥ यतस्त्वया महाभाग मौलिनां दशकं प्रियम् ॥ २० ॥ अर्पितं च तपस्ततं तीव्रं
त्रैलोक्यतापनम् ॥ त्वत्समो नास्ति त्रैलोक्ये देवो वा मानुषोपि वा ॥ २१ ॥ रावण उवाच ॥ धन्योऽस्मि देवदेवेश कृपया ते महेश्वर ॥
अद्य मे सफलं जन्म सफलं मे तपः परम् ॥ २२ ॥ भक्तानुकंपी भगवान्यन्मे प्रत्यक्षमागतः ॥ वरत्रयमहं याचे वरार्हो यद्यहं शिव ॥
॥ २३ ॥ इदं स्थानं परं पुण्यं न त्याज्यं भवता शिव ॥ धन्यो भवतु लोकेषु य इदं क्षेत्रमुत्तमम् ॥ २४ ॥ सेविष्यति च विश्वात्मा स्वे
हितं प्राप्नुयात्परम् ॥ अजेयत्वं तथा सर्वैः सदेवासुरयक्षकैः ॥ २५ ॥ अन्यैश्च प्राणिभिर्देव विना मनुजवानरैः ॥ सर्वज्ञत्वं च विद्यानामे
तत्त्रयमुमापते ॥ २६ ॥ वसिष्ठ उवाच ॥ तथेत्युक्त्वा महादेवस्तत्रैवांतर्दधे ततः ॥ सोपि रावणको नाम दशमौलिः प्रतापवान् ॥२७॥
ययौ पुरवरे स्वीये प्रसन्नोऽसुर संवृतः ॥ इदं क्षेत्रं ततो जातं महादेवाश्रितं प्रिये ॥ २८ ॥ नंदा देवी परं गोप्या तत्रैवास्ति सुरार्चिता ॥
सर्वकामप्रदा नित्यं सर्वकामफलप्रदा ॥ २९ ॥ सौदामिनीदक्षतीरे सुकामेश्वरसंज्ञकः ॥ शिवस्तद्दर्शनादेव सर्वपापैः प्रमुच्यते ॥ ३० ॥
नंदाया उत्तरे शैले गणेशो देवपूजितः ॥ त्रिरात्रं यः परं मंत्रं गणेशस्य जपेन्नरः ॥ ३१ ॥ परं धाम समाप्नोति न विघ्नं जायते क्वचित् ॥
नंदगंगासुमाहात्म्यं को वा वक्तुं क्षमो नरः ॥ ३२ ॥ परं यथामति परमुच्यते ह्यवधारय ॥ दर्शनात्सर्वपापानि नश्यंते नात्र संशयः ॥
॥ ३३ ॥ स्नानात्सर्वमवाप्नोति यद्यदिच्छति मानवः ॥ दुरुक्तं च तथा देवि दुर्भुक्तं जलपानतः ॥ ३४ ॥ नश्यते क्षिप्रमेवेह परत्र च परा
गतिः ॥ पितॄन्संतर्प्पयेद्यस्तु पितरो मुक्तिमाप्नुयुः ॥ ३५ ॥ अपात्रायापि यद्दत्तं जलेनास्याः समन्वितम् ॥ अक्षयं तद्भवेद्देवि सत्यमेव
न संशयः ॥ ३६ ॥ इत्युद्देशेन संप्रोक्तं माहात्म्यं तव सुंदरि ॥ दशमौलितपःक्षेत्रवैभवं तव कीर्त्तितम् ॥ ३७ ॥ अस्मिन्नेव परे स्थाने

संख्यया नवलक्षकाः ॥ प्रभावादेवदेवस्य निर्मुक्ता ब्रह्मराक्षसाः ॥ ३८ ॥ तथा च नवलक्षं तु रथप्रायामरुंधति ॥ बहूनि तत्र तीर्थानि
स्वर्गमोक्षप्रदानि च ॥ ३९ ॥ तथा कपिलकं तीर्थं सर्वतीर्थोत्तमोत्तमम् ॥ कपिलेश्वरो महेशोऽत्र सर्वदेवप्रपूजितः ॥ ४० ॥ धर्मार्थकाममो
क्षाणां प्रदाता स्मृतिमात्रतः ॥ तथा योगेश्वरं लिंगं महापातकनाशनम् ॥ ४१ ॥ तत्तीर्थं परमं ख्यातं सर्वत्र भुवि दुर्लभम् ॥ नियुतानां
त्रयं तत्र निर्मुक्तं ब्रह्मरक्षसाम् ॥ ४२ ॥ तथा वागीश्वरं लिंगं सद्यः प्रत्ययकारकम् ॥ सरस्वत्या पुरा यत्राराधितो भगवाञ्छिवः ॥
॥ ४३ ॥ अनंतान्यत्र तीर्थानि सर्वकामप्रदानि च ॥ चतुर्लक्षं तत्र मुक्तं यत्र योगिगणो बहुः ॥ ४४ ॥ अन्यद्ब्रह्मसरो नाम तीर्थं
सर्वत्र दुर्लभम् ॥ तत्र ब्रह्मेश्वरो नाम शिवोऽस्ति परपुण्यदः ॥ ४५ ॥ तद्दर्शनान्नरो याति शिवतां योगिदुर्लभाम् ॥ तत्र वै पंच लक्षाणि
निर्मुक्तानि तु रक्षसाम् ॥ ४६ ॥ अन्यच्च तव वक्ष्येऽहं तीर्थं परमदुर्लभम् ॥ यत्र कर्णः पुरा तन्वि तपस्तेपे यतात्मवान् ॥ ४७ ॥ तत्रासं
त्रीणि लक्षाणि मुक्तानि ब्रह्मरक्षसाम् ॥ क्षेत्रं तच्छृणु कैलासे निकटे नंदपर्वतात् ॥ ४८ ॥ गंगापिंडारकासंगे शिवक्षेत्रे सुरालये ॥ कर्णो
नाम महाराजो महादीक्षां समाश्रितः ॥ ४९ ॥ तप्त्वा जप्त्वा परं देवं देवीभवनमाश्रितः ॥ अहं च वामदेवश्च व्यासदेवस्तथा शुकः ॥
॥ ५० ॥ पैलो वैशंपायनश्च नारदस्तुंबुरुर्भृगुः ॥ अश्वत्थामा सुदेवश्च रंतिदेवो महाहनुः ॥ ५१ ॥ कश्यपश्च तथानंदो गालवो दलभ
क्षकः ॥ पर्णाशनो महानादः कुंभधान्यस्तपोनिधिः ॥ ५२ ॥ शुनःशेफो भरद्वाजो गौतमो गणरात्रिपः ॥ एते चान्ये च बहवो मुनयो
ब्रह्मवादिनः ॥ ५३ ॥ कर्णयज्ञे समायाताः शतशो वरवर्णिनि ॥ सूर्यमाराधयामास यज्वा यज्ञे स भूमिपः ॥ ५४ ॥ ततः कतिपयाहैस्तु
वरं प्रादान्महात्मने ॥ कवचं च तथाभेद्यं तूणीरं च तथाक्षयम् ॥ ५५ ॥ अजेयत्वं महावीरैः क्षेत्रनाम तथा ददौ ॥ कर्णप्रयागनाम्ना
वै क्षेत्रं तदवधि स्मृतम् ॥ ५६ ॥ प्रशशंसुस्तथा सर्वे मुनयो ब्रह्मवादिनः ॥ स्थितिमत्र तथा चक्रुः स्वस्य स्वस्य वरानने ॥ ५७ ॥
तत्तन्नामभिरत्रापि कुंडान्यासन्महांति च ॥ तत्र तत्र नरः स्नात्वा सूर्यलोके महीयते ॥ ५८ ॥ सूर्यकुंडं च तत्रास्ति चतुर्वर्गफलप्रदम् ॥
उमानाम्नी तथा देवी तत्रैवास्ति महेश्वरी ॥ ५९ ॥ बलिदानादिभिर्या वै पूजयेत्ता सुरार्चिताम् ॥ प्रयच्छति वरान्कामानन्ते स्वपुरवा

सिताम् ॥ ६० ॥ उमेश्वरो महादेवः सर्वयज्ञफलप्रदः ॥ शिवआराधितो देवि कर्णेन सुमहात्मना ॥ ६१ ॥ तत्कर्णेश्वरतां प्राप्तः शतयज्ञ
फलप्रदः ॥ वैनायकी शिला तत्र रक्तवर्णा विचित्रिता ॥ ६२ ॥ तां स्पृष्ट्वा च परिक्रम्य विघ्नानां नाशनं भवेत् ॥ इति पुण्यतमं स्थानं
सर्वकामदमुत्तमम् ॥ ६३ ॥ अत्र यो मृतिमाप्नोति कल्पैश्शिवपुरे वसेत् ॥ कर्णप्रयागे यो मर्त्यो माषमात्रं सुवर्णकम् ॥ ६४ ॥ विप्राय
वेदविदुषे ददाति स्वर्गभाग्भवेत् ॥ ततः शृणु परं क्षेत्रं पांडवीयं महार्त्तिहृत् ॥ ६५ ॥ पांडवा यत्र दुःखस्य नाशाय वरवर्णिनि ॥ शि
वमाराधयामासुर्भक्तिमंतो महाव्रताः ॥ ६६ ॥ धूपैर्दीपैश्च नैवेद्यैस्तपोभिः स्तोत्रपाठकैः ॥ संतुष्टश्च शिवः प्रादाद्दुःखहंत्रीं महाबलाम् ॥
॥ ६७ ॥ इदं च क्षेत्रकं पुण्यं महापुण्यतमं मतम् ॥ लक्षगोदानफलदो महेशः पांडवेश्वरः ॥ ६८ ॥ तत्र धनंजयो नाम नागः परमसु
न्दरः ॥ स्वर्णवर्णो रत्नयुक्तो नित्यं वसति सर्प्पपः ॥ ६९ ॥ तत्र रत्नभवं लिंगं स्वर्णयोनिसुवेष्टितम् ॥ तस्य वै दक्षिणे पार्श्वे गुह्यस्थानं
वदामि ते ॥ ७० ॥ न वदेद्यस्य कस्यापि वेदनिंदारताय च ॥ पंचविंशतिमानेन दयिते करसम्मिते ॥ ७१ ॥ रत्नानां निकरस्तत्र
महाभाग्यवतागमः ॥ लक्षमेकं तत्र गतं स्वर्गे वै ब्रह्मरक्षसाम् ॥ ७२ ॥ अथाऽन्यदपि वक्ष्यामि तीर्थं सर्वसुदुर्लभम् ॥ मेनकाक्षेत्रमाख्या
तं शिवो नित्यं समाश्रितः ॥ ७३ ॥ पुरा मेनकया यत्र पूजितो भक्तितः प्रिये ॥ ददौ तस्यै महादेवो रूपैश्वर्य्यं महत्तरम् ॥ ७४ ॥ मेन
केश्वरनामा च स्थितस्तत्र स्वयं प्रभुः ॥ हरिणी च नदी ख्याता सर्वपापविमोचनी ॥ ७५ ॥ अन्यच्च शिवलिंगं तु पुलहेश्वरनामकम् ॥
दृष्ट्वा च तं महाघोराद्दुःखान्मुच्येत तत्क्षणात् ॥ ७६ ॥ तत्र ब्रह्मशिला पुण्या दर्शनात्पापनाशिनी ॥ तत्र लक्षं तथा देवि निर्मुक्तं ब्रह्मर
क्षसाम् ॥ ७७ ॥ अथान्यदपि कैलासे प्रवक्ष्यामि समासतः ॥ मणिभद्रपुरं दिव्यं सेवितं यक्षकिन्नरैः ॥ ७८ ॥ तत्र यक्षेश्वरो देवो वर्त्तते
भक्तवत्सलः ॥ यक्षकुंडं च तत्रापि शिवलोकप्रदायकम् ॥ ७९ ॥ तत्र दिव्या मणिमती नदी परमपुण्यदा ॥ भौमेश्वरो महादेवः सर्व
कामफलप्रदः ॥ ८० ॥ तत्र यो वै त्रिरात्रं तु निराहारो जितेन्द्रियः ॥ संस्थितः स हि रंभोरु यक्षं पश्यति तत्र हि ॥ ८१ ॥ यद्यद्या
चयते सोऽत्र तत्तत्प्राप्नोति निश्चितम् ॥ तत्र दिव्यसरो नाम नानाकुमुदमंडितम् ॥ ८२ ॥ तत्र देवेश्वरो नाम महादेवोस्त्यरुंधति ॥

तत्र कुञ्जलिका वृक्षो वर्त्तते पुष्पमंडितः ॥ ८३ ॥ एतच्चिह्नं समालक्ष्य ज्ञेयं तत्क्षेत्रमुत्तमम् ॥ स्वर्णाकारं तत्र वामे तत्र स्वर्णेश्वरः
शिवः ॥ ८४ ॥ तमाराध्य महादेवं लभते तन्न संशयः ॥ लक्षाणि त्रीणि चाप्यत्र निर्मुक्तानि कुयोनितः ॥ ८५ ॥ अथान्यच्च प्रवक्ष्या
मि क्षेत्रराजं वरानने ॥ इन्द्रतीर्थमिति ख्यातं सर्वतीर्थोत्तमोत्तमम् ॥ ८६ ॥ यत्रेन्द्रः कालरूपेण भैरवेण वरानने ॥ स्तंभितः सहसा
क्रोधान्महादेवात्मना विभुः ॥ ८७ ॥ गतमानो महेंद्रस्तु तुष्टाव वृषभध्वजम् ॥ प्रसन्नश्च ददौ मुक्तिं महेंद्राय शुभानने ॥ ८८ ॥ तस्मा
त्तत्र च विख्यात इंद्रेशश्च सदाशिवः ॥ निर्मितं च सदा तत्र सरः परमसुंदरम् ॥ ८९ ॥ महत्पुण्यतमं जातं महादेवेन भाषितम् ॥ तत्र ये
स्नानकर्त्तार इंद्रलोकं सदाप्नुयुः ॥ ९० ॥ त एव धन्याः पुरुषा येत्र तीर्थे समागताः ॥ तेषां च दर्शनात्सद्यः पूतात्मा जायते नरः ॥
॥ ९१ ॥ तत्र कालेश्वरो भर्गश्चंद्रार्द्धकृतशेखरः ॥ त्रिशूली च कराली च धन्यदर्शनदायकः ॥ ९२ ॥ तत्रापि त्रीणि लक्षाणि निर्मुक्तानि
कुयोनितः ॥ अथाऽन्यदपि भीमस्य तथा हनुमतः स्थलम् ॥ ९३ ॥ यत्र भीमः पुरा पांडुसुतो वायुसमुद्भवः ॥ संगतो वै हनुमता
तत्क्षेत्रं परमं मतम् ॥ ९४ ॥ तत्र भीमशिला नाम स्पर्शनात्पापनाशिनी ॥ समीपं च ततो देवि शिला हनुमतः स्थिता ॥ ९५ ॥ यो
जनत्रयविस्तीर्णा महाभाग्येन दृश्यते ॥ माहात्म्यं तच्छिलायास्तु को वा वक्तुं क्षमो भवेत् ॥ ९६ ॥ तस्या वै स्पर्शमात्रेण धातवः
स्वर्णतां प्रिये ॥ गच्छंति किं पुनर्देवि दुर्ल्लभं भुवि मानवैः ॥ ९७ ॥ तदधः पंचदंडेन रंध्रं परमदुर्ल्लभम् ॥ तत्राधः क्रोशखण्डार्द्धे बिल्व
वृक्षोऽतिसुन्दरः ॥ ९८ ॥ फलानि तस्य दिव्यानि दुर्लभानि दुरात्मनाम् ॥ गन्धाघ्राणेन दिव्यं स्याज्ज्ञानं परमदुर्लभम् ॥ ९९ ॥
भक्ष्यते च फलं किंचिदजरामरतां लभेत् ॥ तस्य मूलेन सर्वेपि धातवः स्वर्णतां प्रिये ॥१००॥ गच्छेयुर्नैव संदेहो द्विलक्षं ब्रह्मराक्षसाः॥
तस्य क्षेत्रस्य माहात्म्याद्ययुः परमिकां गतिम् ॥ १०१ ॥ अन्यच्चापि प्रवक्ष्यामि क्षेत्रं पुण्यतमं प्रिये ॥ भीमतीर्थं समाख्यातं यत्र भीमो
महाबलः ॥ १०२ ॥ तपश्चक्रे महादेवं संस्मरन् मनसा सुधीः ॥ तत्र भीमेश्वरो नाम महादेवः शुभानने ॥ १०३ ॥ भुक्तिमुक्तिप्रदो 
देवि देवदेवः सनातनः ॥ तद्दर्शनात्पुरा लक्षसंख्यका ब्रह्मराक्षसाः ॥ १०४ ॥ कुयोनितो विनिर्मुक्ता दिव्यदेहान्समाश्रिताः ॥ बदरीनाथ

विभवमुक्तमेवं मया तव ॥ १०५ ॥ पंचलक्षाणि तत्रापि दर्शनान्मुक्तिमागताः ॥ तथा केदारभवने चतुर्लक्षं हि राक्षसाः ॥ १०६ ॥ लक्षं तुंगे तथा लक्षं मध्यमेश्वरपीठके ॥ रुद्रालयें च पादोनं सपादं कल्पतीर्थके ॥ १०७ ॥ कालीगृहे तथा लक्षं निर्मुक्ता ब्रह्मराक्षसाः ॥ यत्र काली पुरा देवी रक्तबीजवधाय च ॥ आराधिता प्रिये देवैरिंद्राद्यैर्दैत्यतापितैः ॥ १०८ ॥ अरुंधत्युवाच ॥ आराधिता कथं देवै रक्तबीजवधाय च ॥ को वायं रक्तबीजोभूत्किंबलः किंपराक्रमः ॥ १०९ ॥ देवानां किं कृतं तेन सर्वं कथय सुव्रत ॥ कथं च निहतो दैत्यः सर्वदेवविमर्दनः ॥ ११० ॥ इति श्रीस्कांदे केदारखंडे कैलासमाहात्म्ये नानातीर्थकथनंनामैकाशीतितमोऽध्यायः ॥ ८१ ॥

॥ वसिष्ठ उवाच ॥ ॥ शृणु प्रिये समासेन रक्तबीजवधाश्रिताम् ॥ पुण्यां पवित्रामायुष्यां कथां दिव्यां मनोहराम् ॥ १ ॥ पुरा शंकुशिरा नाम दानवेंद्रो महाबलः ॥ तस्य पुत्रो महाभागे अस्थिबीजो महासुरः ॥ २ ॥ तस्य पुत्रो महातेजा रक्तबीजो महाबलः ॥ एकदा निहतो देवि सोस्थिबीजो महासुरः ॥ ३ ॥ अस्थीनि चर्वयामास तस्य देवी हि भैरवी ॥ निहते दानवे तस्मिन् देवैः परमकोपितैः ॥ ॥ ४ ॥ श्रुत्वा तत्कर्म देवानां रक्तबीजो महामते ॥ तपश्चक्रे महातेजा ब्रह्मक्षेत्रे वरानने ॥ ५ ॥ पंचलक्षाणि वर्षाणां व्यतीयुस्तपतः प्रिये ॥ त्यक्ताहारविहारस्य परब्रह्मरतात्मनः ॥ ६ ॥ तस्य वै तप्यमानस्य वल्मीकमुपरि ध्रुवम् ॥ बभूव सर्वतश्चैव शैलराज इव स्थितः ॥ ॥ ७ ॥ ब्रह्मापि प्रययौ तत्र विमानेनार्कतेजसा ॥ उवाच परमं तुष्टो रक्तबीजं महासुरम् ॥ ८ ॥ उत्तिष्ठोत्तिष्ठ दनुज मद्दै तप उत्तमम् ॥ कृतं त्वया महाभाग संतुष्टोस्मि तरां त्वयि ॥ ९ ॥ वरं वृणीष्व भद्रं ते यत्ते मनसि वर्तते ॥ दुर्लभं नास्ति त्रैलोक्ये दानवेन्द्र महामते ॥ १० ॥ रक्तबीजोपि तच्छ्रुत्वा वचनं ब्रह्मणेरितम् ॥ उन्मील्य नयने देवि जलैरानन्दसंभवैः ॥ ११ ॥ संमृज्योवाच ब्रह्माणं विमानस्थितमंजसा ॥ भगवंस्त्वं सर्वकर्त्ता सर्वेषामीश्वरः प्रभुः ॥ १२ ॥ त्वत्त एव वयं जाता देवाश्च तव संभवाः ॥ समास्त्वया रक्षणीया यतस्त्वं प्रपितामहः ॥ १३ ॥ वराहोंहं यदि विभो वरदोस्ति भवान्यदि ॥ न वध्योहं सुरैर्दैत्यैर्न गंधर्वैर्न मानुषैः ॥ १४ ॥ न यक्षैर्न पिशाचैश्च पशुभिर्न च पक्षिभिः ॥ नान्यैश्च जीवजातीभिर्न दिवा न निशि प्रभो ॥ १५ ॥ यत्र मे रक्तबिंदुर्वै पतेत्तत्र महासुरः ॥

मद्रूपो मद्बलो देव तथास्तु च मदाकृतिः ॥ १६ ॥ यावंतश्च शरीरे मे भवेयू रक्तबिंदवः ॥ पतेयुश्च तथा भूमौ भवंतु मत्पराक्रमाः ॥ ॥ १७ ॥ एवमेव परं याचे वरं यद्दातुमिच्छसि ॥ इति श्रुत्वा वचस्तस्य ब्रह्मा सर्वपितामहः ॥ १८ ॥ उवाच वचनं प्रीतो रक्तबीजं महासुरम् ॥ भविष्यसि तथैव त्वमीप्सितं यत्त्वयासुर ॥ १९ ॥ स्वस्ति तेऽस्तु गमिष्यामि पुंभिर्मृत्युं न चाप्स्यसि ॥ इत्युक्त्वा द्रुहिणो देवि तत्रैवांतरधीयत ॥ २० ॥ वरान्प्राप्य महातेजाः प्रमत्तोभून्महासुरः ॥ निशुंभशुंभसहितो राज्यं सर्वांगसुंदरि ॥ २१ ॥ चकार वि पुलान्दुर्गान् बलानि च महांति च ॥ स्मृत्वा वैरं निर्जराणां पितुश्च वधमासुरः ॥ २२ ॥ दूतान्संप्रेषयामास वासवाय महासुरः ॥ त्यज राज्यं च स्वर्लोकमस्माकं जगती च वै ॥ २३ ॥ अन्यायेन पुरा देवैर्निर्जिताः सर्वदानवाः ॥ इदानीं बलसंपन्ना वयं युद्धविनि श्चयाः ॥ २४ ॥ अवलेपो न कर्त्तव्यो युष्माभिः सर्वदैवतैः ॥ युद्धेप्सवो यदि सुरा युद्धाय कृतनिश्चयाः ॥ २५ ॥ आगच्छंतु भवंतश्च साहाय्येन युतास्तथा ॥ यो वै जेष्यति नो देवाः स वै राज्यं करिष्यति ॥ २६ ॥ इति दूतमुखेभ्यश्च श्रुत्वा वाचोऽसुरेरिताः ॥ इन्द्र आज्ञापयामास सर्वान् देवान् वरानने ॥ २७ ॥ सन्नद्धकवचास्त्राश्च वरनिस्त्रिंशपाणयः ॥ समेत्य सर्वे त्रिदशा आगच्छंत्वाज्ञया मम ॥ नागमिष्यति यो देवस्स मे वध्यो भविष्यति ॥ २८ ॥ इत्युक्त्वा दैवतान्सर्वान्दूतांश्चोवाच देवराट् ॥ गच्छध्वं रक्तबीजाय सशुंभाय वदंतु वै ॥ २९ ॥ भवंतो दूतकाः सर्वे कार्य्यो नो ह्यवलेपकः ॥ युद्धे जिताः सुरैः पूर्वमस्थिबीजो यथा हतः ॥ ३० ॥ निशुंभशुंभसहितः शयिष्यासि रणाङ्गणे ॥ तथा त्वं सर्वदेवैश्च नावलेपे मतिं कुरु ॥ ३१ ॥ दूताश्चैव तथा श्रुत्वा वासवात्त्वरया युताः ॥ रक्तबीजं तथा प्राप्य समाचख्युर्वचोखिलम् ॥ ३२ ॥ रक्तबीजोपि तच्छ्रुत्वा कोपसंरक्तलोचनः ॥ सर्वदेवविनाशार्थं मतिं चक्रे रणाय वै ॥ ३३ ॥ इति श्रीस्कांदे केदारखंडे कालीतीर्थमाहात्म्ये रक्तबीजवधे दूतप्रेषणंनाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ वसिष्ठ उवाच ॥ ॥ आज्ञतास्तु ततो देवा वासवेन महात्मना ॥ सन्नद्धकवचास्सर्वे आययुः सर्वतोदिशः ॥ १ ॥ तोमरान्परशूंश्चैव शक्तींश्च मुसलांस्तथा ॥ खड्गान्शरान् सतूणीरान्यष्टीन्हष्टीन्स मुद्गरान् ॥ २ ॥ संगृह्य दैवताः सर्वे जयमूचुः पुरंदरम् ॥ इंद्रोऽपि मातलिं सूतमुवाच भगवान् प्रिये ॥ ३ ॥ रथं

साधय मे शीघ्रं साधितश्च तथा रथः ॥ आरुह्य सहसा देवः सर्वदेवसमन्वितः ॥ ४ ॥ सोपि प्रिये रक्तबीजोऽसुरैर्दैत्यैः समन्वितः ॥
तथा सर्वास्त्रसंपन्नो दैत्यदानवपूजितः ॥ ५ ॥ शंखश्च कालनाभश्च वज्रशीर्षो महाहनुः ॥ दुर्नेत्रो रक्तवर्णश्च तीक्ष्णदंष्ट्रो वृषाकृतिः ॥ ६ ॥
दर्दुरो धनुषश्चैव कोलनामा तथासुरः ॥ महानास्यो बृहद्दंष्ट्रो वृषतेजा वृकोदरः ॥ ७ ॥ खड्गरोमा कालदंष्ट्रो देवारिर्बल एव च ॥ एते
चान्ये च बहवो दानवा युद्धदुर्मदाः ॥ ८ ॥ शरान् खड्गांस्तथा कुंतांस्त्रिशूलानि वरानने ॥ एवमादीनि शस्त्राणि गृहीत्वा वरपाणिभिः ॥
॥ ९ ॥ संदष्टौष्ठपुटा दैत्याः क्वेति क्वेति च देवताः ॥ इत्युक्तवंतः प्रययुर्वीरं रसमुपाश्रिताः ॥ १० ॥ शंखान्भेरींस्तथा दध्मुर्जय दैत्यारि
मर्दन ॥ वदंतश्चैव जेष्यामो वासवं वसुभिर्युतम् ॥ ११ ॥ सुमेरुशृंगमास्थाय देवाश्चापि पृथक्पृथक् ॥ मृदंगान्पटहान् ढक्कान्भेरीः शं
खान् सतालकान् ॥ १२ ॥ प्रदध्मुः शतशो देवा रक्तबीजवधैषिणः ॥ एतस्मिन्नंतरे तत्र समरः समपद्यत ॥ १३ ॥ शस्त्रास्त्रैर्विविधैर्घोरै
र्निर्जघ्नुः शतशोऽसुरान् ॥ दैत्याश्चापि तथा देवान् शस्त्रास्त्रैर्नियुतायुतैः ॥ निजघ्नुवारसापन्नाः संदष्टदशनच्छदाः ॥ १४ ॥ देवासुरं तथा
घोरं समरं सम पद्यत ॥ केचिद्भल्लांस्तथा शक्तींस्तोमरान् परशूंस्तथा ॥ १५ ॥ गदाश्च मुसलान्वज्रान्कुठारान् बहुसायकान् ॥ चिक्षिपुः
शतशोरीणां परस्परजयैषिणः ॥ १६ ॥ युयुधुः परिघैः केचिन्मुष्टिभिर्वज्रनिःस्वनैः ॥ परस्परमयुध्यंत दानवाश्च तथा सुराः ॥ १७ ॥
शुशुभुः सर्वतस्तत्र किंशुका इव पुष्पिताः ॥ अश्वानां चैव नागानां निहतानां रणाजिरे ॥ १८ ॥ गात्रेभ्यो निःसरुधारा रुधिरस्य
वरानने ॥ गिरीणामिव पार्श्वेभ्यो गैरिरक्ता इवापगाः ॥ १९ ॥ छिंधि छिंधि भिंदि भिंदि तिष्ठ तिष्ठेति चासकृत ॥ श्रूयंते स्म तथा
वाचो विविधाः सुभटेरिताः ॥ २० ॥ मेघा इव भटा रेजुः सन्नद्धकवचास्तथा ॥ बाणवर्षं विमुंचन्तो विस्फुरद्धहुचंचलाः ॥ २१ ॥
तिष्ठतिष्ठेति गर्जंतः कीर्त्तिवल्लीजयैषिणः ॥ निर्ययुः शतशो नद्यः केशशष्पविभूषिताः ॥ २२ ॥ अस्थिग्रावा रक्तजलास्तथा मस्तिष्क
कर्दमाः ॥ इति वै तुमुले युद्धे संबभूव भटक्षयः ॥ २३ ॥ जयंतश्चैव शुंभश्च निशुंभश्च जयस्तथा ॥ कुवेरो वज्रमुष्टिश्च वह्निर्देवारिरेव च॥
॥ २४ ॥ वायुश्च खड्गरोमा च रुद्रश्चैव वृषाकृतिः ॥ घरश्चैवाथ दुर्नेत्रोऽनिलश्चैव महाहनुः ॥ २५ ॥ प्रत्यूषश्चैव शंखश्च प्रभासश्च वृको

दरः ॥ द्रविणस्तीक्ष्णदंष्ट्रश्च परस्परजयैषिणौ ॥ २६ ॥ चक्रतुर्द्वंद्वयुद्धं तु तथान्ये देवदानवाः ॥ इति युद्धं सममभूत्तथा वर्षसहस्रकम् ॥
॥ २७ ॥ देवानां दानवानां च भीरूणां भयवर्द्धनम् ॥ द्वंद्वयुद्धे प्रिये देवा निर्जिता दनुपुत्रकैः ॥ २८ ॥ तत इंद्रो रक्तवीजं द्वंद्वयुद्धे समा
गतः ॥ विव्याध शतशो बाणैश्चिच्छेद च तथासुरम् ॥ २९ ॥ रक्तबीजोपि तं बाणैर्ववर्ष घनराडिव ॥ अनागतांस्ततो बाणांश्चिच्छेद
शतशो वृषा ॥ ३० ॥ इति वै तुमुलं युद्धं रक्तबीजेन्द्रयोरभूत् ॥ अंधीभूतं जगत्सर्वं बाणजालैरितस्ततः ॥ ३१ ॥ नालक्ष्यते तथा
सूर्य्यश्चंद्रमाश्च तथा ग्रहाः ॥ उल्काश्च शतशः पेतुः समुद्राश्च चकंपिरे ॥ ३२ ॥ इन्द्रेण निहतस्यापि रक्तबीजस्य सुंदरि ॥ भूमौ
पतन्ति कणिकाः शोणितस्य शरीरतः ॥ ३३ ॥ तावंत एव पुरुषास्तद्वीर्य्यास्तत्पराक्रमाः ॥ युयुधुर्देवनाथेन शस्त्रास्त्रैर्नियुतायुतैः ॥३४॥
एतस्मिन्नंतरे देवि वागुवाचाशरीरिणी ॥ भो भो इंद्र त्वया वध्यो नायं दैत्यारिमर्दनः ॥ ३५ ॥ ब्रह्मणो वरदानेन नायं वध्यः सुरासुरैः ॥
इति श्रुत्वा वचस्तद्वै संत्रस्तश्च तथासुरैः ॥ ३६ ॥ स्वं स्वं स्थानं त्यज्य देवा जग्मुर्वै त्रिदिवौकसः ॥ दिशोदशवरापांगी संल्लीनास्त्रि
दिवौकसः ॥ ३७ ॥ सोपि प्रिये रक्तबीजो जयशब्देन पूजितः ॥ उपास्य मानस्त्वसुरैः प्रययौ त्वमरावतीम् ॥ ३८ ॥ पालयामास
धर्मेण राज्यं निहतकंटकम् ॥ देवाधिकारान् सर्वांश्च स्वयं चक्रे महासुरः ॥ ३९ ॥ इति श्रीस्कांदे केदारखंडे कालीतीर्थमाहात्म्ये रक्तबी
जवधे इंद्रपराजयो नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ वसिष्ठ उवाच ॥ ॥ निर्ज्जितास्ते ततो देवा दानवैस्तैर्महाबलैः ॥ इंद्रा
दयो महाभागे संचेरुर्गिरिकन्दरे ॥ १ ॥ लीनानामथ देवानां वर्षाणां नियुतं ययौ ॥ मानवा इव दुःखार्त्ताः संचेरुः पृथिवीमिमाम् ॥
॥ २ ॥ रक्तबीजवधाक्रांतास्तथा शुंभनिशुंभयोः ॥ हृताधिकारास्त्रिदशाश्चेष्टितं न विचक्रमुः ॥ ३ ॥ एकदा वासवाद्यास्ते विबुधा वसव
स्तथा ॥ ब्रह्माणं शरणं जग्मुः स्रष्टारं प्रपितामहम् ॥ ४ ॥ बद्धांजलिपुटाः सर्वे निर्जरा भयविह्वलाः ॥ ऊचुस्ते भक्तिसंपन्ना ब्रह्माणं
जलजोद्भवम् ॥ ५ ॥ देवा ऊचुः ॥ प्रजापते नमस्तुभ्यं ब्रह्मणे ज्ञानचक्षुषे ॥ नमस्त्रिमूर्त्तये तुभ्यं निर्गुणाय महात्मने ॥ ६ ॥ रक्तबीज
भयोद्विग्ना हृतराज्या वयं प्रभो ॥ पृथिव्यामपि प्रत्यक्षं न चरामो भयात्प्रभो ॥ ७ ॥ इन्द्रः स एव भगवन् स वह्निर्यम एव च ॥ निर्ऋ

तिर्वरुणश्चैव वायुश्च धनदस्तथा ॥ ८ ॥ ईशश्चैव स एवास्ति हृतयज्ञा वयं प्रभो ॥ त्वमेव जगतां स्रष्टा प्रमत्तो वरदानतः ॥ ९ ॥ उ
त्साद्यंते दानवेन सृष्टयस्त्वत्कृता इमाः ॥ वधं चिंतय तस्यापि कारणेन प्रजापते ॥ १० ॥ ब्रह्मोवाच ॥ गच्छध्वं त्रिदशाः सर्वे देवदेवं
सनातनम् ॥ अनादिमध्यनिधनं वासुदेवं मया सह ॥ ११ ॥ स ज्ञास्यति वधोपायं रक्तबीजस्य निर्जराः ॥ अहं चैवागमिष्यामि यत्र
विष्णुः सनातनः ॥ १२ ॥ वसिष्ठ उवाच ॥ इत्युक्त्वा तान् समाश्वास्य ययौ देवसमन्वितः ॥ क्षीरांभोधौ यत्र सुप्तो नारदादिभिरर्चितः ॥
॥ १३ ॥ भगवान् वासुदेवो हि रमया सहितः प्रभुः ॥ देवैरपि ततो ब्रह्मा तुष्टाव परमेश्वरम् ॥ १४ ॥ ब्रह्मोवाच ॥ नमो देवाधिदेवाय
वासुदेवाय ब्रह्मणे ॥ यस्येच्छया जगत्सर्वं जायते सचराचरम् ॥ १५ ॥ लक्ष्मीपते नमस्तुभ्यं दानवारे नमो नमः ॥ नमस्त्रैलोक्यनाथाय
नमस्त्रिजगतां पते ॥ १६ ॥ त्रिगुणव्यतिरेकाय त्रिगुणाय गुणात्मने ॥ निरंजनाय निर्द्वंद्व तेऽच्युताय नमो नमः ॥ १७ ॥ ब्रह्मरूपेण
सृजते हरिरूपेण रक्षते ॥ अंते नाशयते देवरुद्ररूपेण ते नमः ॥ १८ ॥ अच्छेद्याय महेशाय निर्भेद्याय महात्मने ॥ अदाह्याय सुरेशाय
ह्यक्लेद्याय महात्मने ॥ १९ ॥ एकः सर्वस्य जगतः पालको नाशकस्तथा ॥ एकोप्यनेकधा भासि पल्वलेषु यथा रविः ॥ २० ॥ त्वत्तो
नान्यं प्रपश्यामि भिन्नं परमया धिया ॥ यस्यांशाश्च वयं सर्वे ब्रह्मविष्णुमहेश्वराः ॥ २१ ॥ आदिं न ते न चैवांतं न मध्यं भगवन्विदुः ॥
नमस्ते शतशो देव भक्तिगम्याय वेधसे ॥ २२ ॥ पुरा त्वया महेशान मत्स्यरूपेण सर्वतः ॥ रक्षितं शृंगके बद्ध्वा नौरूपां पृथिवीमि
माम् ॥ २३ ॥ मनुना संस्तुतश्चासि निहतः शंखकासुरः ॥ ततः कमठरूपेण धृता भूमिस्त्वया प्रभो ॥ २४ ॥ पुनर्वराहरूपेण वारंवारं
धृता धरा ॥ हिरण्याक्षस्त्वया देव निहतो दितिजेश्वरः ॥ २५ ॥ नारसिंहवपुः कृत्वा वरदृप्तो महासुरः ॥ हिरण्यकशिपुर्दैत्यो नखास्त्रेण
हतस्त्वया ॥ २६ ॥ अदित्या गर्भसंभूतो वामनत्त्वमुपागतः ॥ इंद्रराज्यमभीप्सन्यो बलिर्वै छलितस्त्वया ॥ २७ ॥ भार्गवोपि पुरा देव
भूत्वा त्वं जमदग्निजः ॥ रामनामा महेशान निहता दानवांशजाः ॥ २८ ॥ क्षत्रियाः कार्तवीर्याद्या निहता रक्षणे त्वया ॥ पौलस्त्याद्या
महात्मानो निहता राममूर्त्तिना ॥ २९ ॥ पुनः कंसादयो भूपाः पापाचारा महेश्वर ॥ कृष्णनाम्ना त्वया देव हता रक्षणहेतवे ॥ ३० ॥

युगांते म्लेच्छजातीयान्वेदधर्म्मविनिंदकान् ॥ क्षयं नयसि भो देव कल्किरूपी भवान् हरे ॥ ३१ ॥ त्वदंशभूता ब्रह्माद्याः सृष्टिकर्मादि
कुर्वते ॥ त्वमेव सर्वजगतः स्थितिकर्मा कृतांतकः ॥ ३२ ॥ कोटिसूर्यप्रतीकाशो नानाभरणदीप्तिकः ॥ शंखं चक्रं गदां पद्मं धारयन्वै
चतुर्भुजः ॥ ३३ ॥ संस्तूयमानो मुनिभिर्महद्भिः सनकादिभिः ॥ रमया हृतवामांगो घनश्यामो विपासनः ॥ ३४ ॥ ददृशे सर्वदेवैस्तु
ब्रह्मादिभिरकल्मषैः ॥ दृष्ट्वा तान् दुःखसंपन्नान्स्तुवतो मनसा गिरा ॥ उवाच भक्तिसंपन्नान् ब्रह्मादीं स्त्रिदिवौकसः ॥ ३५ ॥ श्रीभगवा
नुवाच ॥ ज्ञातं मे भवतां दुःखं रक्तबीजो महासुरः ॥ ब्रह्मणो वरदानेन दृप्तोस्ति सुरसत्तमाः ॥ ३६ ॥ देवेन मनुजेनापि पशुपक्षिसरी
सृपैः ॥ अन्यैश्च प्राणिभिश्चापि न वध्योयं सुरासुरैः ॥ ३७ ॥ अन्वीक्षितं मया तस्य विचार्य्य बहुधा सुराः ॥ तद्वोहं संप्रवक्ष्यामि
शृणुध्वं कारणं महत् ॥ ३८ ॥ प्रकृतिर्या परा नित्या ब्रह्मविष्णुशिवात्मिका ॥ इच्छया या जगत्सर्वं सृजते सचराचरम् ॥ ३९ ॥
तस्या एव वयं देवा अंशभूता महौजसः ॥ न देवः सा न गंधर्वो न यक्षो न च राक्षसः ॥ ४० ॥ गुह्यको न पिशाचोस्ति न नरो
न मृगादिकः ॥ सेयं परा महामाया हनिष्यति महासुरम् ॥ ४१ ॥ गच्छध्वं च मया सार्द्धं कैलासे शिवमंदिरे ॥ स्तुता सा भवतां
दुःखं हनिष्यति विनिश्चयात् ॥ ४२ ॥ पूर्वं च महिषो दैत्यो निहतश्च तथैव हि ॥ मधुकैटभनामानौ तत्प्रसादेन मे हतौ ॥ ४३ ॥
तस्या एव कृपादृष्ट्या सर्वं संपाद्यते सुखम् ॥ तामाराध्य महेशानीं सुखिताः संभविष्यथ ॥ ४४ ॥ वसिष्ठ उवाच ॥ इति ते संमतिं
कृत्वा वासुदेवादयः सुराः ॥ जग्मुः कैलासनिलये यत्र देवो महेश्वरः ॥ ४५ ॥ इति श्रीस्कांदे केदारखंडे कालीतीर्थमाहात्म्ये रक्तबी
जवधे कैलासगमने चतुरशीतितमोध्यायः ॥ ८४ ॥ ॥ वसिष्ठ उवाच ॥ ॥ केदारमंडले दिव्ये मंदाकिन्याः परे तटे ॥ सरस्व
त्यास्तटे सौम्ये कालीतीर्थमिति स्मृतम् ॥ १ ॥ तत्र गत्वा प्रिये देवा रक्तबीजवधैषिणः ॥ स्तुतिमारेभिरे कर्तुं मायायाः परमात्मनः ॥
॥ २ ॥ देवाऊचुः ॥ नताः स्म इंदीवरनीलशोभां रक्तांबरां रक्तसुगंधभूषाम् ॥ रक्ताननां रक्तविवीटिकां च श्रीरक्तदंतामनिशं भजामः ॥ ॥ ९४
॥ ३ ॥ नारायणीं नारदसेवितां च दुःखापहां दनुजदैत्यविनाशिनीं च ॥ [illegible] दिसुसेवितां च श्रीकालिकां कनकचक्षु

धरां भजामः ॥ ४ ॥ चंडाट्टहासकरिणीं करिचर्म्मवस्त्रां भीमां महादनुजभैरविकां महेशीम् ॥ कंकालजालविलसद्रहभूषितांगीं नुमुण्ड
मालविलसद्धृदयां भजामः ॥ ५ ॥ नेत्रत्रयां भगवतीं भवभाविनीं तां भूमाक्षिकां ज्वलितकांचनरूपनेत्राम् ॥ जिह्वाशतज्वलितसृक्किणि
कांमहेशीं नासापुटांतरमिलज्ज्वलनां भजामः ॥ ६ ॥ यस्या महेशहरिब्रह्मसुरेशकाद्याः कर्त्तुं स्तुतिं भगवति प्रभवो वयं न ॥ तां देवतां
दनुजरक्तविलिप्तवक्त्रां स्मेराननां भवविमुक्तिकरां भजामः ॥ ७ ॥ स्त्रीरूपिभिः शिवगणैर्गगनावरूपैर्नृत्यद्भिरंब गिरिराजअधित्यकायाम् ॥
गायद्भिरेव भवतीं भवभूषणां तां श्रीदक्षिणां धनदधेनुमरं भजामः ॥ ८ ॥ शिवः परोऽपारगुणो निरात्मा निरंजनो यो निरुपद्रवश्च ॥
यदिच्छया सर्वमिदं चराचरं करोति तां देवनुतां भजामः ॥ ९ ॥ लक्ष्मीवपुर्धृतवतीं मुरनाशनस्य गेहे वपुर्धृतवतीं द्रुहिणस्य वाचम् ॥
श्रीपार्वतीति कथितां पुरनाशनस्य तां देवतां निखिलरूपधरां भजामः ॥ १० ॥ श्रीकामरूपनिलयां वरविंध्यवासां जालन्धरे ज्वलन
रूपधरां भवानीम् ॥ कालीतिनामविभवां गिरिराजपीठे तां कालिकां कलिहरां सततं भजामः ॥ ११ ॥ कोटीनभासुरमहत्कनकप्रपीठे
सिंहासने मणिगणांचितसर्वधाम्नि ॥ भास्वत्कलाधरवरांचितशेखरां तां नारायणीं सुरवरार्चितकां भजामः ॥ १२ ॥ संसारसागरसुतार
णपादपोतां भक्तार्त्तिनाशनधृतावतरां महेशीम् ॥ वेदांतशास्त्रपरिगम्यतरां भवानीं भावेन सेवनगमां सुतरां भजामः ॥ १३ ॥ देवि त्वया
भगवति प्रलयांतकाले संमोह्यते हरिरसावुदधिप्रसुप्तः ॥ तन्नाभिजातसरसीरुहजन्मनस्त्वां दुःखस्य नाशनकरीं भवतीं भजामः ॥१४॥
ययात्वयामहिषनाशनहेतुभूतं सर्वात्मकं वपुररंहिधृतं भवान्या ॥ सिंहोपरिप्रविलसत्कनकाभिरामं मत्तंमदारुणदशंभवतीं भजामः ॥
॥ १५ ॥ भूयः पुरा भगवती भवतीह लोकान् दुर्भिक्षपीडिततराञ्छतवार्षिकीये ॥ दृष्ट्वा शतेन नयनांबुरुहां सुमातः सर्वान्हि रक्षितवतीं
भवतीं भजामः ॥ १६ ॥ वसिष्ठ उवाच ॥ इति स्तुता सा गिरिशस्य पत्नी ब्रह्मादिभिर्देवगणैर्नतांसैः ॥ आविर्बभूवाथ हिमालयस्य शृंगे
यथा प्रातरिनोवभासे ॥ १७ ॥ तेजोराशिं तं तु दृष्ट्वा तदानीं नेमुर्भूमौ भक्तियुक्ता नतांसाः ॥ वारंवारं रक्तबीजेन तप्ता दृष्ट्वा देवीं तो
षमापुः शुभांगीम् ॥ १८ ॥ दृष्ट्वा तान्वै भक्तियुक्तांस्तदार्त्तान्देवान्सर्वान्विष्णुब्रह्मादिकांश्च ॥ तुष्टोवाच दैत्यनाशस्य हेतुर्नो भेतव्यं दैत्य

स्कं. पु. राजादिदानीम् ॥ १९ ॥ संतुष्टास्मि प्रेमतो भक्तितश्च स्तुत्या देवाश्चानया ध्यानमूर्त्या ॥ अस्मिन्स्थाने ये करिष्यंति पूजां स्नानं दानं के. खं.
स्तोत्रमेतच्च काले ॥ २० ॥ तेषां यद्यन्मानसे दैवतं स्यात्तत्सर्वं मे ते लभेयुः प्रसादात् ॥ कालीतीर्थं नामतश्चेदमत्र तुष्टा वोहं मुक्तिदं
॥ ९५ ॥ भाग्यगम्यम् ॥ २१ ॥ यूयं देवा निर्भया रक्तबीजात्स्वं स्वं स्थानं गच्छत ब्रह्मपूर्वाः ॥ कालेनाहं रक्तबीजं वधिष्ये धन्याश्चैवं देवतास्ते अ. ८६
भवंतु ॥ २२ ॥ कृत्वा चेदं भाषितं ते भवान्याः स्वं स्वं स्थानं कालमन्वेषयंतः ॥ आग स्तस्याः कारितुं रक्तबीजाद्देवर्षिं ते नारदं
प्राप्य चोचुः ॥ २३ ॥ इति श्रीस्कांदे केदारखंडे कालीतीर्थमाहात्म्ये रक्तबीजवधे श्रीकालीस्तोत्रं नाम पंचाशीतितमोऽध्यायः ॥८५॥
॥ वसिष्ठ उवाच ॥ ॥ ततो देवाः समागत्य नारदं जगदुर्मुनिम् ॥ देवकार्य्यं कुरु प्राज्ञ गच्छ दानवमंदिरे ॥ १ ॥ कुर्य्याद्यथा महा
देव्या अपराधं मुनीश्वर ॥ रक्तबीजवधार्थाय यतस्व मतिमुत्तमाम् ॥ २ ॥ इति तेषां तु विज्ञप्तिं श्रुत्वा मुनिवरस्तदा ॥ ययौ ह्याका
शमार्गेण जटामुकुटमंडितः ॥ ३ ॥ रक्तबीजपुरं रम्यं नानाकौतुकमंडितम् ॥ देवदानवगंधर्वयक्षराक्षसकिन्नरैः ॥ ४ ॥ विविधैरप्सरोभिश्च
पन्नगैर्गुह्यकैस्तथा ॥ सेवितं मुनिवर्य्यैश्च ब्राह्मणैश्च सहस्रशः ॥ ५ ॥ स्वर्णप्राकारवप्राढ्यं रथ्यापणविराजितम् ॥ मणिप्रकरपुष्पाढ्यं
पताकाध्वजमालिनम् ॥ ६ ॥ प्रसन्ननरनारीकं गवाक्षाट्टालकान्वितम् ॥ सुमेरुशृंगसदृशैर्गृहैश्च परिशोभितम् ॥ ७ ॥ ददर्श भगवान्वि
प्रवर्य्यो नारदनामकः ॥ ऐरावतो वासवस्य तथा चोच्चैःश्रवा हयः ॥ ८ ॥ पारिजातादयो वृक्षा अन्यद्वस्तु न किंचन ॥ अग्नेरजस्त्रिशूलं
च तथाग्नेयं च द्रव्यकम् ॥ ९ ॥ यमस्य महिषं चैव दंडशक्ती तथा प्रिये ॥ वरुणस्य तथा पाशः कच्छपश्च तथा हृतः ॥ १० ॥ वा
यवीयं च कौबेरं ऐशं ब्राह्ममथापि वा ॥ सर्वं ददर्श तत्रैव ह्याहृतं वै बलीयसा ॥ ११ ॥ आगतं नारदं दृष्ट्वा रक्तबीजो महासुरः ॥
उत्थाय कृतवान्सर्वं पाद्यमाचमनीयकम् ॥ १२ ॥ अर्घ्यं च विधिवद्दत्वा वेशयामास स्वासनम् ॥ उवाच प्रांजली राजा रक्तबीजो
महासुरः ॥ १३ ॥ स्वागतं ते महाभाग कुशलं तव सुव्रत ॥ किमागमनकृत्यं ते धन्योऽस्मि दर्शनात्तव ॥ १४ ॥ नारद उवाच ॥ ॥ ९५
ब्रह्मलोकं गतः पूर्वं ततः कैलासमभ्यगाम् ॥ यान्यैन्द्रादिषु लोकेषु रत्नभूतानि दानव ॥ सर्वाणि तानि रत्नानि तव गेहे वसंति वै ॥१५॥

सर्वाधिकं तथैश्वर्य्यं दृष्टं तव महामते ॥ त्वादृशो न बभूवापि नास्ति नो भविताऽसुरः ॥ १६ ॥ वशीकृता त्रिलोकी वै येन दानव
सत्तम ॥ वरं चैव तथा प्राप्तं सर्वेभ्योऽभयमेवच ॥ १७ ॥ तपश्चैव तथा प्राप्तं त्वया सर्वोत्तमं प्रभो ॥ १८ ॥ रक्तबीज उवाच ॥ भगव
न्मुनिशार्दूल सर्वगोसि यतो मुने ॥ पृच्छामि त्वां महाभाग तद्वदस्व मम प्रभो ॥ १९ ॥ क्वचिद्दृष्टं त्वया विप्र जनितं यन्मया पुरम् ॥
यो मदाज्ञाकरो नास्ति देवो वा दानवोपि वा ॥ २० ॥ एतादृक् क तथैश्वर्यं मदीयं वै यथा स्थितम् ॥ तन्मे वद महाभाग सर्वज्ञोसि
महामुने ॥ २१ ॥ नारद उवाच ॥ सम्यक् पृष्टं त्वया साधो गतः सर्वत्र वै ह्ययम् ॥ त्वदाज्ञाकारिणः सर्वे देवा वाप्यथ दानवाः ॥
॥ २२ ॥ परमेकत्र कैलासे शिवोस्ति परदुर्जयः ॥ किं वदामि तदैश्वर्य्यं त्रिषु लोकेषु दुर्लभम् ॥ २३ ॥ सहस्रयोजनायामं कल्पपादप
काननम् ॥ यत्र सर्वाधिका तन्वी रत्नभूता त्रिलोकके ॥ २४ ॥ तस्य धैर्य्यस्य माहात्म्यादजेयः स सुरासुरैः ॥ यस्येच्छया जगत्सर्वं
जायते सचराचरम् ॥ २५ ॥ रक्तबीज उवाच ॥ कथं शिवो महाभाग ह्यजेयोस्ति सुरासुरैः ॥ किं कारणं विप्रवर्य्य तद्वदस्व महामते
॥ २६ ॥ नारद उवाच ॥ ऊर्ध्वरेता यतो देवो यस्य नास्ति त्रिलोकके ॥ अतएव स दुर्जेयः ससुरासुरपन्नगैः ॥ २७ ॥ तं चेत्ते जेतु
मिच्छास्ति पूर्वं तद्धैर्य्यनाशने ॥ कुरु बुद्धिं महाभाग सर्वं ते संभविष्यति ॥ २८ ॥ वसिष्ठ उवाच ॥ इति तस्य मुनेर्वाक्यं श्रुत्वा
दनुसुतस्तदा ॥ चकार विजये बुद्धिं श्रीशिवस्य परात्मनः ॥ २९ ॥ नारदोपि ययौ स्वर्गं दानवैः प्रतिपूजितः ॥ स्त्रीवेषं च तदा कृत्वा
रक्तबीजो महासुरः ॥ ३० ॥ त्रैलोक्यदुर्लभं रूपं कृत्वा रुद्रसमीपतः ॥ ययौ वेगेन कैलासे तन्मनोमोहनाय वै ॥ ३१ ॥ दृष्ट्वा शिवश्च
तां नारीं रूपयौवनशालिनीम् ॥ पार्वतीरूपिणीं तन्वीं किंचिन्मोहवशं गतः ॥ ३२ ॥ तावत्पार्वत्यपि केश्चिदागता शिवसन्निधिम् ॥
तां च दृष्ट्वा स्ववामांगीं मनो द्वैविध्यमागतम् ॥ ३३ ॥ विचार्य्य दानवं तं तु शशाप च महासुरम् ॥ पार्वतीछद्मना दुष्ट यन्मां
मोहितुमागतः ॥ हनिष्यति ततस्त्वां हि पार्वत्येव महेश्वरी ॥ ३४ ॥ इति तद्वचनं श्रुत्वावहेलयहि च तद्वचः ॥ ययौ स्वीये तथा
धाम्नि मंत्रिवर्गेण संगतः ॥ ३५ ॥ मंत्रयामास दनुजो महादेवजयाय च ॥ कथं सा पार्वती मह्यं भवेद्रागयुताऽसुराः ॥ ३६ ॥ वामदेव

मा स्पृति, मद्यति यावत्।

जयेनाहं बहुसंपाद्यते मम ॥ आकर्षणीया प्रथमं गृहिणी प्राणवल्लभा ॥ ३७ ॥ धैर्य्यनाशश्च तस्यापि स्वयमेव भविष्यति ॥ स्त्रिया मे
मरणं केन भाव्यते तत्त्वदर्शिना ॥ ३८ ॥ इंद्राद्याः सकला देवा नाशं यस्य रणांगणे ॥ संमुखं किं पुनः स्त्रीयं भ्रांत्या तेन प्रभाषि
तम् ॥ ३९ ॥ गच्छध्वं यत्र सा देवी संस्थिता परसुंदरी ॥ साम्ना नेया प्रथमतो नो चेदाकृष्य सत्वरम् ॥ ४० ॥ ततस्तमपि कैलासे
शिवमेकाकिनं वयम् ॥ जेष्यामो धर्मनिर्मुक्तं ततः श्रेयो लभामहे ॥ ४१ ॥ पार्वतीविरहेणासौ निर्विचेष्टो भविष्यति ॥ ४२ ॥ वसिष्ठ
उवाच ॥ इत्याज्ञप्ता दानवेन रक्तबीजेन तेऽसुराः ॥ धूम्राक्षचंडमुंडाद्या महत्सैन्येन वारिताः ॥ ४३ ॥ ययुः कैलासभवनं यत्र देवी
प्रतिष्ठिता ॥ कैलासशृंगमासीनां नानालंकारदीपिताम् ॥ ४४ ॥ शतचंद्रसमोद्योतां मोहयंतीं जगत्त्रयम् ॥ ते तु दृष्ट्वा महादेवीं निपेतु
र्धरणीतले ॥ ४५ ॥ मोहस्य वशमापन्नाश्चिरात्संज्ञां प्रलभ्य च ॥ उच्चुस्त्राससमायुक्ताः प्रभोर्वचनगौरवात् ॥ ४६ ॥ ऐंद्रे याम्ये वारुणे
च पाताले ब्रह्मलोकके ॥ न दृष्टा त्वादृशी नारी देवी वा मानवी हि वा ॥ ४७ ॥ धिक्कर्म्मणो विधेर्देवि या त्वं विपिनसंगता ॥ निर्द्व
नाथ महेशाय व्याघ्रचर्मांबराय च ॥ ४८ ॥ भूतवेतालयुक्ताय व्यालयज्ञोपवीतिने ॥ भस्मप्रलिप्तदेहाय नकुलाय कपालिने ॥ ४९ ॥
शि भिक्षाशिने करालाय त्रिनेत्राय वराय च ॥ एकाकिने हि जटिने नरमुंडीयमालिने ॥ ५० ॥ दत्ता त्वं त्रिषु लोकेषु सुंदरीं भवतीं तदा ॥
रक्तबीजो महाराजस्त्वामिच्छति त्रिलोकपः ॥ ५१ ॥ इंद्राद्या लोकपालाश्च करदास्तस्य सर्वतः ॥ धन्यः स एव लोकेषु गीयते देवदा-
नवैः ॥ ५२ ॥ त्वयि प्रेमं परं चास्ति रक्तबीजस्य नित्यशः ॥ यदुक्तं प्रांजलिर्भूत्वा महाराजेन तच्छृणु ॥ ५३ ॥ त्रैलोक्यमखिलं चेदं
सर्वे वै देवदानवाः ॥ मद्वशे संति संहृष्टाः करदा मम सांप्रतम् ॥ ५४ ॥ रत्नानि यानि देवानां तानि मे संति सुन्दरि ॥ नागकन्या
यक्षकन्या देवकन्यास्तथैव च ॥ तासां त्वमुत्तमा देवि भवितासि न संशयः ॥ ५५ ॥ योगिनं तं परित्यज्य समागच्छ ममांतिके ॥
एतद्रूपस्य ते देवि साफल्यं संभविष्यति ॥ ५६ ॥ जन्मनश्चैव साफल्यं तव देवि भविष्यति ॥ इति निश्चित्य भो देवि रक्तबीजस्य ॥९६॥
धीमतः ॥ वचनं कुरु कल्याणि भव कल्याणिनी शुभा ॥ ५७ ॥ वसिष्ठ उवाच ॥ इति श्रुत्वा वचस्तेषां विहस्य च पुनः पुनः ॥

प्रकाशयंती बहुलं गिरिगह्वरकाननम् ॥ ५८ ॥ उवाच गतसंत्रासा चंडमुंडपुरोगमान् ॥ क्रुद्धेनमनसा चैव मदसंरक्तलोचना ॥ ५९ ॥
श्रीदेव्युवाच ॥ ॥ रेरेदैत्या दुराचारा दुर्म्मदाश्च विहिंसकाः॥मत्त एव हि युष्माकं रक्तबीजानुयायिनाम् ॥ ६० ॥ रक्तबीजस्य वै शीघ्रं
वधो हि प्रभविष्यति ॥ शिवा मे भवतामस्रं पास्यन्ति च समुत्सुकाः ॥ ६१ ॥ दानवा ऊचुः ॥ ॥ सावलेपा च तरुणि मदमत्तासि
भामिनि ॥ निःशंकं वदसि प्रौढं यथा वै प्राकृतं जनम् ॥ ६२ ॥ एवं मा वद सर्वेषां रक्तबीजं प्रभुं क्वचित् ॥ इन्द्रादयो लोकपाला
येनैकेन पराजिताः ॥ ६३ ॥ तस्य त्वं सम्मुखे स्थातुं स्त्री त्वं किमु भविष्यसि ॥ अबलासि परं देवि सौकुमार्य्ययुता परा ॥ ६४ ॥
तथा विधेयं हि यथा क्रुद्धयेन्नो रक्तबीजकः ॥ नो चेत्त्वां शुभसर्वांगीं बद्ध्वा केशेषु सत्वरम् ॥ ६५ ॥ बलात्कारेण चाकृष्य नयिष्यत्येव
दानवः ॥ सामपूर्वं भजस्वाद्य रक्तबीजं महाबलम् ॥ ६६ ॥ वसिष्ठ उवाच ॥ ॥ इति तन्निष्ठुरं श्रुत्वा क्रोधसंरक्तलोचना ॥
विज्ञप्तिं चैव देवानां स्मृत्वा वधपरायणा ॥ ६७ ॥ हुंकारेण बलं तद्वै दाहयामास च क्षणात् ॥ दग्धे सैन्ये ततो धूम्रलोचनाद्यास्तु
दानवाः ॥ परिघायुधनिस्त्रिंशैर्ववृषुर्जगदंबिकाम् ॥ ६८ ॥ महा मेघा यथा काले पृथिवीं वरवर्णिनि ॥ शस्त्राण्यस्त्राणि तेषां वै वार
यामास हुंकृतैः॥ ६९ ॥ भस्मीभूतानि सर्वत्र पेतुर्वै धरणीतले ॥ केचिद्वृक्षान्पर्वतांश्च प्रस्तरान्पर्वतोपमान् ॥ ववृषुः शतशस्तत्र
क्रोधसंरक्तलोचनाः ॥ ७० ॥ ततः क्रुद्धा महादेवी खण्डशश्चचकार तान् ॥ ललाटदेशात्क्रुद्धाया निश्चक्राम भयानका ॥ कालीकराल
वदना भीमा रक्तविलोचना ॥ ७१ ॥ कृशा प्रत्यक्षधमनी भीमनादा करालिका ॥ कालांजनचयाभा सा भैरवी कालिकापरा ॥ ७२ ॥
खट्वांगवरहस्ता च नरमुंडविभूषणा ॥ खादंती च करेकेण हस्तिनं माहिषं तथा ॥ ७३ ॥ स्रवदस्रेभचर्म्मा च जिह्वाललनभीषणा ॥
महानादान् प्रमुंचंती योगिनीकोटिसंवृता ॥ ७४ ॥ मंगला पिंगला धान्या भ्रामरी भद्रिका तथा ॥ उल्का सिद्धा संकटा च
ह्यष्टौ योगिनिवृंदपाः ॥ ७५ ॥ कपालान्यस्रपूर्णानि गृहीत्वा ननृतुश्च ताः ॥ शंखनादान्प्रमुंचंत्यो भेरीपणवनिःस्वनान् ॥ ७६ ॥
इति तद्भीषणं सैन्यं दृष्ट्वा कालीमयं तथा ॥ शशंस रक्तबीजाय सर्वं वृत्तं वरानने ॥ रक्तबीजोपि तच्छ्रुत्वा महाक्रोधवशं

गतः ॥ ७७ ॥ इति श्रीस्कांदे केदारखंडे कालीतीर्थमाहात्म्ये रक्तबीजवधे कालिकोत्पत्तिर्नाम षडशीतितमोऽध्यायः ॥ ८६ ॥
वसिष्ठ उवाच ॥ ॥ मंत्रिवर्य्यान् समाहूय वचनं चेदमब्रवीत् ॥ रक्तबीजो रक्तनेत्रः संदष्टदशनच्छदः ॥ १ ॥ स्त्रीभ्य एते दुरात्मानः
पलाय्यात्र समागताः ॥ नयध्वं निगडैर्बद्ध्वा शीघ्रं कारागृहेषु च ॥ २ ॥ इति तच्छासनं श्रुत्वा ह्युग्रदंडस्य भूपतेः ॥ सर्वे प्रांजलयः
प्रोचुर्वेपमाना वरानने ॥ ३ ॥ नास्माभिस्तद्भयादत्र, ह्यागतं तव सन्निधिम् ॥ किं तु विज्ञापनार्थाय भवंतं दनुजाधिपम् ॥ ४ ॥
सामपूर्वं महाराज नायाता तव मंदिरे ॥ निर्दग्धं बलमस्माकं युद्धाय च समागता ॥ ५ ॥ मारयित्वाथ वा तां वै जीवंतीं वा
तवांतिके ॥ नयामो दनुशार्दूल त्वं जेतासि सुवर्चसा ॥ ६ ॥ अस्माकमेकस्तां देवीं बद्ध्वानयतु किं भवान् ॥ त्वत्प्रसादाद्वयं
सर्वे त्रैलोक्ये सचराचरे ॥ ७ ॥ न पश्यामो महाभाग प्रतियोद्धारमात्मनः ॥ किमु स्त्रीयं महाभाग संयुगे स्थास्यति क्वचित् ॥ ८ ॥
केशेष्वाकृष्य बध्वा वा क्षणादत्र नयामहे ॥ संदेहो वै न कर्त्तव्यो मा खिदो दनुजाधिप ॥९॥ इति तद्भाषितं श्रुत्वा रक्तबीजो महा
ऽसुरः ॥ प्रहृष्टचेताः सहसा जगाद दनुजान्प्रिये ॥ १० ॥ भोभो धूम्राक्ष चंडाद्या यदि प्रियचिकीर्षवः ॥ गच्छध्वं यत्र सा देवी
योगिनीगणसंवृता ॥ ११ ॥ तत्र गत्वा च तां बद्ध्वा शीघ्रमत्र महासुराः ॥ नयध्वं यदि साम्ना वै तथा कुरुत चाथ वा ॥ १२ ॥
एवं श्रुत्वा तदाज्ञप्तं रक्तबीजस्य मत्प्रिये ॥ धूम्राक्षचंडमुंडाद्याः संदष्टदशनच्छदाः॥ ययुर्यथा वह्निशिखां पतंगा इव सर्वतः ॥ १३ ॥
सप्तकोट्यो दानवानां कैलासेथ समाययुः॥ भीमनादान्प्रकुर्वन्तो दिशो दश महाभटाः ॥ १४ ॥ आरुह्य गिरिशृंगाणि समुत्पाट्य तरूंस्त
था॥आययुः क्रमशस्तत्र यत्र देवी समास्थिता ॥ १५ ॥ हिमवद्दक्षिणे पार्श्वे दहशुर्गिरिकन्यकाम् ॥ योगिनीशतकोटीभिरावृतां सुमहा
प्रभाम् ॥ १६ ॥ स्तूयमानां मुनिवरैर्देवैर्यक्षैः सकिन्नरैः ॥ अप्सरोभिः समाकीर्णां दीपस्य कलिकामिव ॥ १७ ॥ तां दृष्ट्वा सहसा
दूरात्प्रोचुर्विगतबुद्धयः ॥ रेरे देवि महावीर्य्यो रक्तबीजो भयंकरः ॥ १८ ॥ देवानां दानवानां च तथा गंधर्व्वरक्षसाम् ॥ जेता वै ॥ ९७
शत्रुशैन्यानां क्रोधस्य वशमागतः ॥ १९ ॥ हनिष्यत्येव त्वां दुष्टां नो चेत्तं भज सत्वरम्॥ यासां त्वं बलमास्थाय निश्चितासि

हि सांप्रतम् ॥२०॥ पश्यंत्यास्ते क्षणादेता वातेनाभ्रगणा यथा ॥ क्षयं खलु गमिष्यंति त्वं च केशेषु सत्वरम् ॥ बद्धा गमिष्यसे नूनं रक्तबीजस्य सन्निधिम् ॥ २१ ॥ इति श्रुत्वा बृंहितं च दानवेभ्यो महेश्वरी ॥ नेत्रसंज्ञां चकाराशु तां कालीं विकृताननाम् ॥ ॥ २२ ॥ तदिंगितं तदालक्ष्य महाकाली हि भैरवी ॥ खट्वांगं च तथा पाशं कर्त्तरीं चांकुशं तथा ॥ गृहीत्वा पाणिभिः काली संचचार बलांतरे ॥ २३ ॥ यथा दावानलज्वाला निदाघे गहनं वनम् ॥ संचरंती महाकाली कांश्चिद्वै निजगाल ह ॥ २४ ॥ कांश्चिद्विचर्वयामास प्रेक्षयामास कानपि ॥ रथं रथेन संयोज्य हस्तिनं हस्तिना तथा ॥ चूर्णयामास बहुशो दानवान्रणकोविदान् ॥ ॥ २५॥ लेलिह्यमाना रसनां बृहद्दंष्ट्रा भयंकरी ॥ कदनं दानवानां वै चकार बहुधा प्रिये ॥ २६ ॥ कांश्चिज्जग्राह केशेषु चिक्षेपांबरमंडले ॥ पोथयामास पादेन खट्वांगेनापि कानपि ॥ २७ ॥ अंकुशेन तथाऽऽकृष्य निष्पिपेष रणांगणे ॥ इति सैन्यं क्षणान्नष्टं महाकक्षमिवाग्निना ॥ २८ ॥ ततः क्रुद्धो धूम्रनेत्रो गदया तां जघान ह ॥ गदया ताडिता देवी न च क्लेशमवाप सा ॥ २९ ॥ क्रुद्धा च तं धूम्रनेत्रं खट्वांगेन जघान हि ॥ पपात विगतप्राणो भूमौ खट्वांगपेषितः ॥ ३० ॥ ततश्चंडश्च मुण्डश्च जघ्नतुः कालिकां शरैः ॥ अनेकैश्च तथा चक्रैस्सूर्य्यबिंबसमप्रभैः ॥ ३१ ॥ निजगाल शरान्देवी चक्राणि च महेश्वरी ॥ विविशुश्चक्रबिम्बानि सूर्य्या इव घनोदरम् ॥ ३२ ॥ क्रुद्धा संपीड्य बाहुभ्यां चंडमुंडौ महासुरौ ॥ खड्गेन शितधारेण जघान शिरसी तयोः ॥ ३३ ॥ तीक्ष्णदंष्ट्रं मुष्टिनासौ निष्पिपेष महाबलम् ॥ कालनाभं महावीरं खट्वांगेन जघान ह ॥ ३४ ॥ अन्ये च बहवो वीरा निहता दानवास्तथा ॥ क्षणेन तद्बलं सर्वं नष्टं तद्वै वरानने ॥ ३५ ॥ पलायनपराः शेषा भेजुर्देवि दिशो दश ॥ अट्टहासं ततः काली कृत्वा देव्यंतिके ययौ ॥ ३६ ॥ चामुण्डा च ततो नाम्ना जाता तदवधि प्रिये ॥ हतशेषा दानवाश्च शशंसू रक्तबीजकम् ॥ चंडमुंडवधं श्रुत्वा परं क्रोधवशं गतः ॥ ॥ ३७ ॥ इति श्रीस्कान्दे केदारखंडे कालीतीर्थमाहात्म्ये रक्तबीजवधे चंडमुंडादिवधो नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

वसिष्ठ उवाच ॥ ॥ इति तन्निधनं श्रुत्वा रक्तबीजोऽतिविस्मितः ॥ जगाद सर्वान्दनुजान्हंतहंतेति चासकृत् ॥ १ ॥ किमे

तन्महदाश्चर्य्यमेकाकिन्या क्षणाद्बलम् ॥ निहतं दानवेंद्राणामुचितं किं च साम्प्रतम् ॥ २ ॥ मदाज्ञापालका ये च सप्तद्वीपेषु
दानवाः ॥ पातालेषु तथा सन्ति दानवाश्चांतरिक्षगाः ॥ ३ ॥ दैत्या शुंभनिशुंभाद्या आनयध्वं महासुरान् ॥ ते च वध्या भविष्यन्ति
मच्छासनपराङ्मुखाः ॥ ४ ॥ वसिष्ठ उवाच ॥ ॥ इत्याज्ञाप्य दानवेन्द्रो जगाम सौधमंदिरम् ॥ तेपि शीघ्रं वायुवेगादानयामा
सुरंजसा ॥ ५ ॥ दानवान्युद्धदुर्द्धर्षान्महाबलपराक्रमान् ॥ ते च सिंहैर्गजैरश्वैर्गर्दभैरुष्ट्रकैस्तथा ॥ रथैर्मृगैर्वराहैश्च मेषैर्गोभिः कलि
जरैः ॥ ६ ॥ केचिदश्वमुखाश्चान्ये गजवक्त्रास्तथापरे ॥ सिंहानना बृहद्दंष्ट्रा महाघोरा भयानकाः ॥ ७ ॥ कृकलासमुखाः केचित्के
चिद्भल्लमुखास्तथा ॥ बिडालवदनाः केचित्केचिद्घूकमुखाः परे ॥ ८ ॥ केचिन्मत्स्यमुखा दैत्याः सर्पदेहास्तथापरे ॥ तथांजन
चयाभासास्तथा स्तनितानिःस्वनाः ॥ ९ ॥ घोरास्या घोरनयना द्विमुखा बहुपादकाः ॥ छिन्नग्रीवाः करिमुखा वृकवक्त्रास्तथापरे ॥
आगताः कोटिशस्तत्र रक्तबीजस्य शासनात् ॥ १० ॥ शतकोटि सहस्राणि रथानां हस्तिनां तथा ॥ हयानां पंचपंचाशत्कोटिलक्षा
णि दानवाः ॥ ११ ॥ यूथपाश्च तथा पद्मपद्मानि चागमंस्ततः ॥ पृथिवीं छादयंतस्ते सपर्वतवनद्रुमाम् ॥ १२ ॥ चंद्रसूर्य्यग्रहादीनां
मार्गं रुरुधुरम्बरे ॥ कैलासं च तथासाद्य पूर्वपश्चिमगामिनम् ॥ १३ ॥ आगताश्च तथा वीरा नानाशस्त्रास्त्रसंयुताः ॥ संदष्टौष्ठ
पुटाः क्रूराश्चंडवेगा महास्वनाः ॥ १४ ॥ अनेकतूर्य्यसन्नादास्तथा पणवगोमुखाः ॥ शंखाः कंका नंदनाद्या विनेदुश्च महद्बले ॥
॥ १५ ॥ इति तद्वै महासैन्यं दृष्ट्वा देवाश्चकंपिरे ॥ स्वांस्वां शक्तिं ददुः सर्वे इंद्राद्यास्त्रिदिवौकसः ॥ १६ ॥ ऐंद्री गजसमारूढा तच्छ
स्त्रास्त्रविभूषणा ॥ ब्राह्मी व्यक्तिस्तथायाता हंसयानसमास्थिता ॥ १७ ॥ अक्षसूत्रं च दधती करेण कमंडलुम् ॥ माहेश्वरी
तथा देवी महावृषभमास्थिता ॥ त्रिशूलपट्टिशधरा व्याघ्रचर्मांबरा सती ॥ १८ ॥ तथाऽऽययौ क्रौंचहर्त्तुः शक्तिः परमकोपिता ॥
मयूरस्था शक्तिहस्ता वैष्णवी च समागता ॥ १९ ॥ गरुडस्था महामाया शंखचक्रगदाम्बुजा ॥ वाराही च बृहद्दंष्ट्राधृतविश्वंभरा
परा ॥ गदापरिघनिर्स्त्रिंशचर्म्महस्ता तथाऽऽययौ ॥ २० ॥ नारसिंही महामाया नृसिंहस्य तनूधरी ॥ तत्कंधरासटाक्षेपभिन्न

नक्षत्रमण्डला ॥ २१ ॥ येये देवास्तत्र गताः सर्वे स्त्रीरूपधारिणः ॥ २२ ॥ योगिन्यश्च तथा चाष्टौ स्वस्वरूपं समाश्रिताः ॥
चामुंडा च महाशक्तिश्चंडरूपा महोन्नता ॥ २३ ॥ समाययौ महादेवी तादृशीकोटिसंवृता ॥ सिंहोपरि समासीना भुजाऽष्टपरि
मंडिता ॥ २४ ॥ नानाशस्त्रप्रहरणा मदमत्तविलोचना ॥ शक्तिसैन्यं तथा तन्वि कोटिकोटिकसंख्यकम् ॥ २५ ॥ गंगाद्वारमभि
व्याप्य काश्मीरं च तथापरम् ॥ नीलकंठेश्वरं पीठं मानसं च तथा सरः ॥ २६ ॥ कुंभोदकं तथा तीर्थं कुरुवर्षं च गंडकीम् ॥
अभिव्याप्य महासैन्यं तस्थावद्रिरिवाचलः ॥ २७ ॥ अप्सरो गणसंकीर्णं देवगंधर्वमंडितम् ॥ आकाशं प्रबभूवाथ विमानैश्च
सुशोभितम् ॥ २८ ॥ अथ युद्धं च समभूद्दानवानां बलेन हि ॥ शक्तिभिश्चापि तुमुलं रोमहर्षणकारकम् ॥ २९ ॥ गदाभिः परि
घैश्चापि शक्तितोमरसायकैः ॥ खट्वांगैर्मुसलैश्चैव क्षेपणीयैस्त्रिशूलकैः ॥ शतघ्नीभिश्च युयुधुः शक्तिभिश्चैव दानवाः ॥ ३० ॥ प्रवहुश्च
तथा नद्यो रुधिरस्य शरीरिणाम् ॥ मांसकर्दमिलास्तत्र ह्यगाधा बहुशः प्रिये ॥ ३१ ॥ करिकच्छपकल्लोलाश्छिन्नहस्तविहंगमाः ॥
निहता दानवाः कैश्चिच्छिवाभिर्भक्षिताः परे ॥ ३२ ॥ वज्रेण निहता ऐंद्र्या तथा केचिद्द्विधाकृताः ॥ कमंडलुजलेनापि ब्राह्म्या संमा
१व र्जिता मृताः ॥ ३३ ॥ माहेश्वर्यास्त्रिशूलेन कौमार्य्याः शक्तिना हताः ॥ चक्रेण विष्णुशक्त्या वै वाराह्या दंष्ट्रया हताः ॥ ३४ ॥
नखैर्विदारयामास नारसिंही तथाऽपरान् ॥ महाकाली संचचार हंसती दानवे बले ॥ ३५ ॥ इति तत्परमं युद्धं लोमहर्षणकारकम् ॥
भीरूणां भयदं तत्र कैलासे महदायते ॥ ३६ ॥ गजानां गर्जनैश्चैव हयानां ह्रेषितैस्तथा ॥ रथानां चैवचीत्कारैर्भटानां चैव
गर्जितैः ॥ ३७ ॥ शब्दितं बहुशस्तत्र धरणीगगनांतरम् ॥ धनुष्टंकारशब्देन नाराचनिःस्वनैस्तथा ॥ ३८ ॥ भिंदिभिंदि छिंधि
छिंधि तिष्ठतिष्ठ क यास्यसि ॥ इति तत्परमे युद्धे दैत्यमातृगणस्य च ॥ ३९ ॥ निपातनं पर्वतानां वृक्षाणां दृषदां तथा ॥
बभूव सततं तत्र मातृदानवमण्डले ॥ ४० ॥ एवं क्रमेण तत्रापि जातो वै रुधिरार्णवः ॥ विनेदुः शतशस्तत्र शिवाः श्येनाश्च

वायसाः ॥ ४१ ॥ गगनं च तथा रेजे पताकाशतपंक्तिभिः ॥ पालाशकुसुमैर्देवि माधवे विपिनं यथा ॥ ४२ ॥ निहता दानवा

